# MudgalapurAna Khanda 5 Lambodaracharitam

# मुद्गलपुराणं खण्डः ५ लम्बोदरचरितम्

## Document Information

Text title : Mudgala Purana Khanda 5 Lambodaracharitam

File name : mudgalapurANam5.itx

Category : purana, ganesha

Location : doc_purana

Proofread by : Yash Khasbage

Latest update : September 18-19, 2023 Ganeshachaturthi

Send corrections to : sanskrit at cheerful dot c om



Please note that proofreading is done using Devanagari version and other language/scripts are generated using **sanscript**.

September 18, 2023

*sanskritdocuments.org*

# मुद्गलपुराणं खण्डः ५ लम्बोदरचरितम्

॥ मुद्गलपुराणं खण्डः ५॥

॥ अथ श्रीमुद्गलपुराणे पञ्चमः खण्डः प्रारभ्यते ॥

(Page खं. ५ अ. १ पान १)

## ५.१ त्रिविधतपोवर्णनं नाम प्रथमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

शौनक उवाच ।
श्रुतं मया महाख्यानं गजाननकथाश्रितम् ।
सर्वसौख्यकरं तात ब्रह्मभूतपदप्रदम् ॥ १॥

तथा तृप्तिं न याम्येव पीत्वा ब्रह्मामृतं परम् ।
गुणज्ञो गणराजस्य कस्तं मुञ्चति मानद ॥ २॥

धन्या वयं महाभाग त्वदासङ्गसमाश्रयात् ।
यत्र योगप्रदा गाथा वर्तते त्वन्मुखे द्विज ॥ ३॥

लम्बोदरस्य माहात्म्यमधुना वद सर्वदम् ।
कीदृशोऽयं गणेशानः कीदृशं ब्रह्म तस्य च ॥ ४॥

कति तस्यावताराश्च किङ्कर्मा सोऽपि विघ्नपः ।
किमर्थमागतो भूमौ तत् सर्वं वद विस्तरात् ॥ ५॥

सूत उवाच ।
एवं दक्षेण संश्रुत्य गजाननचरित्रकम् ।
पृष्टो योगीन्द्रमुख्यश्च गाणपत्योऽथ मुद्गलः ॥ ६॥

दक्ष उवाच ।
गजाननस्य माहात्म्यं श्रुत्वा सङ्क्षेपतः परम् ।

न तृप्तोऽहं महाभाग पायं पायं सुधामिव ॥ ७॥

अतो लम्बोदरस्य त्वं चरित्रं वद विस्तरात् ।
सर्वसिद्धिप्रदं पूर्णं श्रवणात् पठनान्नृणाम् ॥ ८॥

गणेशस्य कथां योगिन् शृण्वन्ति च पठन्ति ये ।
श्रावयन्ति प्रपृच्छन्ति चत्वारः पुण्यभागिनः ॥ ९॥

धन्या ये पुरुषा लोके सादरा मुनिसत्तम ।
कथायां कृतकृत्यास्ते योगिनो योगभूषणाः ॥ १०॥

सूत उवाच ।
एवं तस्यादरं दृष्ट्वा हर्षितो मुद्गलो मुनिः ।
जगाद तं महाभागं प्राजापत्येन्द्रमादरात् ॥ ११॥

मुद्गल उवाच ।
साक्षाद्ब्रह्मसुतस्त्वं च ब्रह्मतुल्यो न संशयः ।
तत्र किं गणनाथे वै चित्रं रसयुतः प्रभो ॥ १२॥

येषां मुखारविन्देषु गणेशस्मरणं भवेत् ।
इच्छामि तेषां दासत्वं नित्यं दक्ष प्रजापते ॥ १३॥

अधुना शृणु वक्ष्यामि सङ्क्षेपण चरित्रकम् ।
लम्बोदरस्य विस्तारे कः समर्थो भवेत् प्रभो ॥ १४॥

संवादं पूर्णसम्भूतमसितस्य महात्मनः ।
नैध्रुवस्याऽत्र वक्ष्यामि सर्वसिद्धिप्रदायकम् ॥ १५॥

प्रणम्य मुनिशार्दूलो नैध्रुवो वत्सरं वनम् ।
ययौ तपःप्रसिद्ध्यर्थं महाभागो महामुनिम् ॥ १६॥

स तताप तपो घोरं दिव्यवर्षसहस्रकम् ।
तपसा तस्य देवेन्द्रा भीताश्च प्रबभूविरे ॥ १७॥

किमयं तपसा साध्यं कर्तुमिच्छति वाडवः ।
न तुल्यं तपसोऽस्यात्र ब्रह्माण्डे किं भविष्यति ॥ १८॥

ततस्तस्याऽऽश्रमेऽकस्मादसितोऽभवदागतः ।
पितृव्यं मुनिरुत्थाय प्रणनाम कृताञ्जलिः ॥ १९॥

पुपूज भक्तिसंयुक्तः कृताञ्जलिपुटः स्थितः ।

तस्याऽऽज्ञया विनीतः स आसने संस्थितोऽभवत् ॥ २०॥

तमुवाच महायोगी सोऽसितो हितकारकम् ।
वचो भावेन सन्तुष्टो भ्रातृपुत्रं तपोधनम् ॥ २१॥

असित उवाच ।
देहं किं तपसा पुत्राऽतिशोषयसि तापस ।
देहशोषणरूपं यत्तपो मुख्यं न शास्त्रतः ॥ २२॥

अतो देहश्रमं त्यक्त्वा तपो मुख्यं समाचर ।
येन त्वं ब्राह्मणो भूत्वांऽते ब्रह्मणि गमिष्यसि ॥ २३॥

मुद्गल उवाच ।
असितस्य वचः श्रुत्वा नैध्रुवो भक्तिसंयुतः ।
पुनः प्रपच्छ योगीद्रं संशयेन समन्वितः ॥ २४॥

नैध्रुव उवाच ।
कृच्छ्रचान्द्रादिधर्मेण यथाविधि कृतं मुने ।
तपो ब्रुवन्ति सर्वज्ञास्तत्र मुख्यं किमप्यहो ॥ २५॥

(Page खं. ५ अ. १ पान २)
असित उवाच ।
तपश्च त्रिविधं प्रोक्तं तापदं नात्र संशयः ।
तच्छ्रुणुष्व विधानेन योगिवन्द्यो भविष्यसि ॥ २६॥

कृच्छ्रचान्द्रायणादीनि तपांसि प्रवदन्ति च ।
पञ्चाग्निसाधनादीनि वायुभक्षात्मकानि च ॥ २७॥

इत्यादिभेदा बहवस्तपसो विविधस्य च ।
तदेव बाह्यभावस्थं पुत्र जानीहि निश्चितम् ॥ २८॥

इहामुत्रप्रदं तात तपः फलमयं स्मृतम् ।
फलं भुक्त्वा पुनः सोऽपि दीनरूपो भवेत् किल ॥ २९॥

अन्यच्छ्रुणु महाभाग तपः परमदुश्चरम् ।
वायुरोधात्मकं देहे प्राणायामेन जायते ॥ ३०॥

तत्र प्राणस्य सन्तापो जायते नात्र संशयः ।
देहस्यापि तथा पुत्र तपस्तेन तदुच्यते ॥ ३१॥

षट्चक्रभेदने दक्षमन्तर्ध्यानपरायणः ।
सहस्रारे गतं वायुं रोधयेत्तत्र लालसः ॥ ३२॥

तपःप्रभावेन तेन क्षुद्रसिद्धियुतो नरः ।
भवति ज्ञानमार्गज्ञस्त्रिकालज्ञानसंयुतः ॥ ३३॥

दूरश्रवणसामीप्यं कुरुते कामगां गतिम् ।
जले स्थलं स्थले तोयमाकाशे नगरादिकम् ॥ ३४॥

अहताज्ञश्च सर्वत्र भवते परमद्युतिः ।
अपरायुः समायुक्तो ब्रह्माद्यांश्चालयत्यपि ॥ ३५॥

एककल्पस्य सर्वेषां वृत्तान्तं कथयत्यपि ।
जानाति स तपो योगादन्तर्ध्यानपरायणः ॥ ३६॥

सोऽपि गत्वा विधेर्लोकं भुनक्ति विविधं सुखम् ।
पुण्यान्ते पुनरत्रैव दीनो भवति निश्चितम् ॥ ३७॥

तृतीयं त्वं तपोरूपं शृणु मत्तो सुयोगदम् ।
द्विविधं च तपो येन साधितं गुरुमार्गतः ॥ ३८॥

तेनैकाग्रमयं चित्तं भवत्यत्र न संशयः ।
सर्वत्रात्मस्वरूपं स पश्यति ज्ञानचक्षुषा ॥ ३९॥

तत्रानुभवमात्रेण शमदमपरायणः ।
भवते तेन सन्तापो देहे मनसि जायते ॥ ४०॥

विषयान्निन्दयन् सोऽपि जडोन्मत्तपिशाचवत् ।
चरति सर्वभावज्ञ आत्मनिष्ठतया सुत ॥ ४१॥

ततो निरोधयोगेन निवृत्तिषु परायणः ।
चित्तं संरुध्य सर्वत्र निवृत्तिं लभते स्वयम् ॥ ४२॥

अहं ब्रह्मेति यत् प्रोक्तं कुतस्तत्र भयं भवेत् ।
न जगज्जगदात्मा वै मनो वाणीविहीनकः ॥ ४३॥

स्वत उत्थानभावो नोत्थानं परत एव न ।
न स्वतः परतस्तत्र उत्थानं वर्जितं भवेत् ॥ ४४॥

एवं निरोधयोगेन शमी दमपरायणः ।
सन्तोषेण स्वयं योगी वर्तते नित्यदा सुत ॥ ४५॥

तत्र सन्तोषभावेन स्थितस्य देहचेतसोः ।
सन्तापो जायते नित्यं तदेव तप उच्यते ॥ ४६॥

ततो निरोधभूमिं स त्यक्त्वा शान्तिपरायणः ।
त्यक्त्वा पञ्चविधं चित्तमेवं ब्रह्मैव जायते ॥ ४७॥

ततो विधिनिषेधाभ्यां हीनो योगधरः स्वयम् ।
रसहीनश्चरत्यत्र प्रारब्धानुभवेन सः ॥ ४८॥

यथा जलानि सर्वत्र सुत गच्छन्ति सागरे ।
यदृच्छया तथा सोऽपि भोक्ता भोगेन नित्यदा ॥ ४९॥

तत्रांऽतरे शरीरेऽस्य तापः सञ्जायते सदा ।
शान्त्या भोगपरत्वेन तदेव तप उच्यते ॥ ५०॥

(Page खं. ५ अ. २ पान ३)
एतद्योगात्मकं सुज्ञ तपस्ते कथितं मया ।
तृतीयं ब्रह्मदं पूर्णं तदर्थं यत्नमाचर ॥ ५१॥

तपोधना महाभागा योगिनस्तत्परायणाः ।
ब्राह्मणास्तपसा युक्ता ब्रह्मभूता भवन्ति ते ॥ ५२॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
पञ्चमे खण्डे लम्बोदरचरिते असितनैध्रुवसंवादे
त्रिविधतपोवर्णनं नाम प्रथमोऽध्यायः ॥ ५.१

## ५.२ भस्मासुरवधो नाम द्वितीयोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
असितस्य वचः श्रुत्वा नैध्रुवो विस्मितोऽभवत् ।
प्रणम्य तं महाभागं जगाद विनयान्वितः ॥ १॥

नैध्रुव उवाच ।
स्वामिन् वद महायोगं योगदं साधनं परम् ।
तदर्थं कस्य भक्तिर्मे कर्तव्या योगिसत्तम ॥ २॥

असित उवाच ।
शृणु पुत्र प्रवक्ष्यामि लम्बोदरकथानकम् ।
तेन सर्वं महायोगं लभसे नात्र संशयः ॥ ३॥

एकदाऽहं तथा पुत्र वत्सरस्ते पिता पुरा ।
तपसा शुद्धभावेन भवावः स्म च निर्मलौ ॥ ४॥

ततो योगस्य प्राप्त्यर्थं यत्नवन्तौ सुसंस्थितौ ।
अन्तर्ज्ञानसमायुक्तौ जडोन्मत्तादिसुप्रियौ ॥ ५॥

एकाग्रं साधयित्वा वै निरोधे संस्थितौ तथा ।
सहजावस्थया युक्तौ सुखयुक्तौ भवावहे ॥ ६॥

तत्रैव मोहहीनत्वं दृष्ट्वा परमविस्मितौ ।
शान्तिहीनौ ततो जातौ गतौ च ब्रह्मणोंऽतिकम् ॥ ७॥

तत्र स्पर्धासमायुक्तौ विश्वामित्रवसिष्ठकौ ।
समायातौ प्रणम्यैनं प्रतिष्ठन्तौ मदान्वितौ ॥ ८॥

क्रोधयुक्तौ विधातारं प्रपृच्छन्तौ विशेषतः ।
कोऽधिको वद धातस्त्वं तपसा योगसेवया ॥ ९॥

तच्छ्रुत्वा तौ जगादाऽथ ब्रह्मा सर्वपितामहः ।
येन क्रोधो जितो नूनं तं जानाम्यधिकं मुनिम् ॥ १०॥

युवां क्रोधयुतौ पूर्णौ तत्र किं विद्यते तपः ।
सर्वत्र शान्तिदं योगं तं यो जयति सोऽधिकः ॥ ११॥

ततः प्रणम्य विश्वेशं वदतः स्म तपोधनौ ।
विनयेन समायुक्तौ तपस्पर्धापरायणौ ॥ १२॥

वसिष्ठविश्वामित्रावूचतुः ।
कीदृशोऽयं प्रजानाथ क्रोधः सर्वभयङ्करः ।
कुत्र तिष्ठति देवेश किंरूपः किंस्वभाववान् ॥ १३॥

जयन्ति केन योगेन तं दुष्टं योगिनः प्रभो ।
सर्वं वद विभो तस्य तं जेष्यावो न संशयः ॥ १४॥

ब्रह्मोवाच ।
अत्राऽहं कथयिष्यामीतिहासं सर्वसिद्धिदम् ।

तेन क्रोधं च कामं चाभिमानं जयति प्रभुः ॥ १५॥

शकुनेरभवत् पुत्रः शुक्रं भस्मासुरोऽतपत् ।
उपसङ्गम्य सङ्गृह्य विद्यां पञ्चाक्षरीं पुरा ॥ १६॥

दीक्षां गृह्य महादेवमुपासनविधानतः ।
साधयामास भावेन भस्मोद्धूलितविग्रहः ॥ १७॥

सहस्रे प्रगतेष्वेव प्रभुर्वर्षेषु शङ्करः ।
तं ययौ वरदानार्थं सर्वदेवसमावृतः ॥ १८॥

आगतं शङ्करं दृष्ट्वा उत्थाय प्रणिपत्य तम् ।
(Page खं. ५ अ. २ पान ४)
पूजयित्वा प्रतुष्टाव स्तोत्रैः शैवैर्महासुरः ॥ १९॥

जगाद शङ्करो दैत्यं सन्तुष्टो भक्तमुत्तमम् ।
वरं वरय दास्येऽहं भक्त्या ते तपसाऽसुर ॥ २०॥

भस्मासुर उवाच ।
यस्य शम्भो महेशान मस्तकेऽहं धरामि सः ।
हस्तं सद्यो मृतो भूत्वा ततो भवतु भस्मसात् ॥ २१॥

अन्येभ्यः सर्वभूतेभ्यो न भयं मे कदाचन ।
भवेत् सर्वातिगा शक्तिस्तथा कुरु महेश्वर ॥ २२॥

तच्छ्रुत्वा विस्मितः शम्भुस्तं जगाद महासुरम् ।
सर्वं च ते महादैत्य भविष्यति मदाज्ञया ॥ २३॥

हस्तस्ते यस्य शिरसि दक्षिणः सम्पतिष्यति ।
स वै भस्ममयः सद्यो भविष्यति न संशयः ॥ २४॥

ततः शिवो ययौ स्थानं कैलासं गणसंवृतः ।
दैत्यस्तत्रैव तिष्ठन् स विचारमकरोत् स्वयम् ॥ २५॥

अहो शिवस्य वामाङ्गे संस्थिता जगदम्बिका ।
रूपलावण्यसंयुक्ता रत्नभूताऽतिसुन्दरी ॥ २६॥

एतादृशी मया कुत्र दृष्टा नैव सुरूपिणी ।
नग्नः शम्भुरयं तस्याऽयोग्यो नैव भवेद्रतौ ॥ २७॥

अतोऽहं यत्नमास्थाय वरदानप्रभावतः ।

शम्भुं भस्ममयं कृत्वा ग्रहीष्यामि च पार्वतीम् ॥ २८॥

एवं विचार्य दैत्येन्द्र आययौ शङ्करान्तिकम् ।
कैलासे गिरिवर्ये स वेगमास्थाय दारुणः ॥ २९॥

दक्षिणं हस्तमूर्ध्वं स कृत्वा शङ्करसन्निधौ ।
आययौ तं विलोक्यैव पपाल गिरिजापतिः ॥ ३०॥

नमस्कारादिचिह्नैश्च हीनं दृष्ट्वा स्वसन्निधौ ।
असुरं भावसंयुक्तं भयभीतः समन्ततः ॥ ३१॥

ततः सोऽपि महादैत्यः क्रोधयुक्तो विशेषतः ।
धावयित्वा तमनु वै ग्रहीतुं प्रोद्यतोऽभवत् ॥ ३२॥

ततोऽतिवेगमास्थाय शिवो भीत्या पलायत ।
अधावत् पृष्ठमास्थाय तं भस्मासुर एव च ॥ ३३॥

पलन्तं शङ्करं तत्र ददर्श कमलापतिः ।
सस्मार गणपं चित्ते किं भविष्यति विह्वलः ॥ ३४॥

सोऽपि तुष्टाव चाथर्वशिरसा विघ्ननायकम् ।
विष्णुः परमशोकार्तो महादेवस्य कारणात् ॥ ३५॥

शिवश्च भयसंयुक्तो गणेशं स्वयमस्तवीत् ।
महासङ्कटनाशार्थं शरणागतवत्सलम् ॥ ३६॥

शिव उवाच ।
किं पश्यसे नाथ विनायकस्त्वं दैत्येन सर्वत्र च मां सुत्रासितम् ।
दक्षं भुजं मस्तकगं गणेश कृत्वा स मां भस्ममयं करिष्यति ॥ ३७॥

नानाजनैः सेवितपादपद्म किं विस्मृतो मां भयभङ्गकारिन् ।
चिन्तामणे चित्तनिवासक त्वं संरक्ष विघ्नेश दयाघनात्र ॥ ३८॥

त्वदन्यदेवं शरणं गजास्य प्रभुं समर्थं न च यामि नाथ ।
न कोऽपि हेरम्ब महानुभाव क्षमो हि मां रक्षितुमीश्वरः कः ॥ ३९॥

लम्बोदरामोघ सुचिन्तनं ते स्वानन्दवासिंश्च महोदरस्य ।
रक्षस्व मां मृत्युमुपागतं त्वं त्वत्पादनिष्ठं भयभञ्जनाशु ॥ ४०॥

किं सिद्धिबुद्धिप्रविहारकेण सक्तः प्रजातोऽसि विनायक त्वम् ।
भक्तानुकम्पीति तवैव नाम वेदे कथं सङ्कथितं महात्मन् ॥ ४१॥

किं लक्षलाभप्रभवार्थमेवं संसक्तभावैरसि विस्मरंश्च ।
मां रक्ष नो चेन्निगमस्य देव व्यर्थं यशः सम्भविता परात्मन् ॥ ४२॥

(Page खं. ५ अ. ३ पान ५)
यथा दिनेशः समकालयुक्तः प्रकाशदाता भवतीति नित्यम् ।
तथा हि ते भक्तजनानपारान् क्षमोऽसि तान् रक्षितुमन्तरं किम् ॥ ४३॥

किं योगरूपातिविलम्बनेन रक्षस्व भीतं मरणे सुसंस्थम् ।
हेरम्ब विघ्नेश विनायकाशु रक्षस्व रक्षस्व महेशपुत्र ॥ ४४॥

एवं स्तुवति शम्भौ स विष्णोर्हृदि गजाननः ।
प्रविश्य बुद्धिसन्दाता बभूवे भक्तवत्सलः ॥ ४५॥

धृत्वा स्त्रीवेषकं विष्णुर्ययौ तं भस्मकारकम् ।
महासुरो मुमोहाऽसौ तां दृष्ट्वा मोहिनीं स्त्रियम् ॥ ४६॥

तां समागत्य पप्रच्छ दैत्येन्द्रो मोहसंयुतः ।
कुत्र गच्छसि सुश्रोणि किं ते कार्यमुपस्थितम् ॥ ४७॥

वद मां तत् करिष्यामि त्वद्दासोऽहं न संशयः ।
अहं सर्वेश्वरोऽत्रैव न समो मे प्रविद्यते ॥ ४८॥

भज मां भावसंयुक्ता भजन्तं ते च दासकम् ।
त्वदधीनो भविष्यामि सदा वराङ्गने मतम् ॥ ४९॥

तस्य तद्वचनं श्रुत्वा स्मित्वा सा तं जगाद ह ।
अहं मोहप्रदा नारी मोहिन्यत्र समागता ॥ ५०॥

मदाज्ञया दैत्य यदि वर्तसे त्वं निरन्तरम् ।
तदा ते गृहगा भूत्वा तिष्ठाम्यत्र न संशयः ॥ ५१॥

तथेति दैत्यराजस्तां जगाद साऽब्रवीत् पुनः ।
नृत्यं कुरु मदग्रे त्वं यथा नृत्यामि वै अहम् ॥ ५२॥

तथेति प्रतिपाद्यैव सा ननर्त कलान्विता ।
तथा दैत्याधिपस्तत्र ननर्त काममोहितः ॥ ५३॥

तया दक्षिणहस्तश्च स्थापितः शिरसि स्वके ।
तथा सोऽपि चकाराशु भ्रान्तो विघ्नेशमायया ॥ ५४॥

भस्मसादभवद्दैत्यो भस्मासुरश्च तत्क्षणात् ।
ततः सा विस्मिता भूत्वा तुष्टाव गणनायकम् ॥ ५५॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पञ्चमे खण्डे लम्बोदरचरिते भस्मासुरवधो नाम द्वितीयोऽध्यायः ॥ ५.२

## ५.३ क्रोधासुरराज्यप्राप्तिवर्णनं नाम तृतीयोऽध्यायः

॥ श्रीगणेशाय नमः ॥

ब्रह्मोवाच ।
गाणेशैः स्तोत्रमुख्यैः सन्तुष्टाव विष्टरश्रवाः ।
गणेशं सिद्धिदं पूर्णं भक्तेभ्यो भक्तवत्सलम् ॥ १॥

ततः स मोहिनीरूपमभूत् त्यक्तुं समुद्यतः ।
एतस्मिन्नन्तरे तत्राऽमरैः सम्बोधितः शिवः ॥ २॥

ज्ञात्वा भस्मासुरं शम्भुर्मृतं विस्मितमानसः ।
ननर्त भक्तिसंयुक्तो जय विघ्नेश उच्चरन् ॥ ३॥

ततः सर्वैः समायुक्तो मुकुन्दकपुरं ययौ ।
तत्र नारीस्वरूपस्थमदर्शत् केशवं शिवः ॥ ४॥

महामोहप्रदं रूपं दृष्ट्वा विष्णोः सुविस्मितः ।
तदज्ञानो महादेवस्तां ययौ कामविह्वलः ॥ ५॥

तं दृष्ट्वा मोहितं विष्णुः पपाल स्त्रीस्वरूपधृक् ।
तामन्वधावद्देवेशः शङ्करो विह्वलो भृशम् ॥ ६॥

ततस्तत्याज तद्रूपं विष्णुः स पुरुषोऽभवत् ।
(Page खं. ५ अ. ३ पान ६)
शिवः खिन्नश्च तत्रैव स्खलितोऽभूत् सुविह्वलः ॥ ७॥

ततः सर्वे ययुर्देवाः स्वस्वस्थानं मुदा युताः ।
स्तुत्वा विष्णुं महाभागं शिवः स्वस्थानगोऽभवत् ॥ ८॥

शिवस्य वीर्यसम्पातात्तद्वीर्यप्रभवोऽसुरः ।
बभूव श्यामवर्णश्च ताम्रचक्षुः प्रतापवान् ॥ ९॥

स शुक्रमुपसङ्गम्योवाच तं विनयान्वितः ।

प्रणम्य तेजसा युक्तः शिष्यं पालय मां मुने ॥ १०॥

ततो ध्यानेन स ज्ञात्वा तस्य सर्वं महामुनिः ।
पुनस्तं प्रजगादैव वचनं हर्षयन्नरम् ॥ ११॥

शुक्र उवाच ।
मोहिनीं शङ्करो दृष्ट्वा कामबाणप्रपीडितः ।
पश्चाद्विष्णुं समालोक्य स्वचित्ते क्रोधमादधे ॥ १२॥

मनो मे चञ्चलं पूर्णं तद् ग्रहीष्यामि यत्नतः ।
मनोग्रहणरूपश्च क्रोधस्तत्र प्रवर्तते ॥ १३॥

तस्मिन् काले च वीर्यस्य स्खलनं सहसाऽभवत् ।
तस्माज्जातोऽसि तेन त्वं क्रोधनामा भविष्यसि ॥ १४॥

ततो दानवमुख्यैः स कारयामास विप्रप ।
मौञ्ज्यन्तसर्वसंस्कारान् यथाविधि स शास्त्रवित् ॥ १५॥

क्रोधो वेदादिकं सर्वमभ्यस्य गुरुसन्निधौ ।
शम्बरस्य सुतां तुल्यामुपयेमे महासुरः ॥ १६॥

प्रीतिनाम्नीं महारूपां सर्वावयवशालिनीम् ।
रूपलावण्यसंयुक्तां विषयानां प्रवर्धिनीम् ॥ १७॥

ततः शुक्रं समागम्य जगाद प्रणिपत्य तम् ।
कृताञ्जलिर्महातेजा दैत्येभ्यः सुखदं वचः ॥ १८॥

क्रोधासुर उवाच ।
ब्रह्माण्डविजयं स्वामिन् करिष्यामि त्वदाज्ञया ।
मन्त्रं देहि तदर्थं मे सर्वं यशोविवर्धनम् ॥ १९॥

ब्रह्मोवाच ।
तस्य तद्वचनं श्रुत्वा काव्यः सर्वज्ञसत्तमः ।
दैत्यानां प्रहितार्थाय ददौ तस्मै महामनुम् ॥ २०॥

सूर्यस्य विधियुक्तं प्रणम्य सङ्गृह्य तं ययौ ।
वनं व्याघ्रादिसङ्कीर्णं तपसे कृतनिश्चयः ॥ २१॥

एकपादेन तिष्ठन् समजपन् मन्त्रमुत्तमम् ।
चित्ते ध्यायन्नर्यमाणमूर्ध्वदृष्टिर्महासुरः ॥ २२॥

निराहारेण देवेशं तोषयामास यत्नतः ।
शीतोष्णादिभयं त्यक्त्वा काष्ठवत् संस्थितोऽभवत् ॥ २३॥

दिव्यवर्षसहस्रेण तुष्टो भानुस्तमाययौ ।
वरं दातुं महादैत्यमुवाच घननिःस्वनः ॥ २४॥

रविरुवाच ।
वरान् वृणु महाभाग क्रोधाऽहं ते ददामि तान् ।
सन्तुष्टस्तपसोग्रेणेप्सितान् हृदि महामते ॥ २५॥

श्रुत्वा रवेर्वचो दैत्यो दृष्ट्वा तं पुरतः स्थितम् ।
प्रणनाम महाभक्त्याऽपूजयत्तेजसां निधिम् ॥ २६॥

पुनः प्रणम्य तुष्टाव कृताञ्जलिपुटोऽसुरः ।
सौरसूक्तेन देवेशं पुनः सन्नत आदरात् ॥ २७॥

तमुवाचार्यमा दैत्यं वरं वृणु महामते ।
यं यमिच्छसि तं तं ते दास्याम्यत्र न संशयः ॥ २८॥

क्रोधासुर उवाच ।
उत्पत्तिस्थितिसंहारयुक्ता ये देवनायकाः ।
तेभ्यो मे मरणं भानो न भवेद्वै कदाचन ॥ २९॥

ब्रह्माण्डजयने शक्तं मां कुरुष्व विशेषतः ।
राज्यं चराचरस्यैव देहि मेऽदितिनन्दन ॥ ३०॥

आरोग्यं मनसा यद्यच्चिन्तितं सफलं भवेत् ।
न मे समो भवेत् कुत्र तथा कुरु दिवस्पते ॥ ३१॥

श्रुत्वा तस्य वचो रम्यं सर्वेभ्यो भयदायकम् ।
(Page खं. ५ अ. ४ पान ७)
विस्मितस्तेजसां नाथस्तं जगाद सुयन्त्रितः ॥ ३२॥

भानुरुवाच ।
क्रोध त्वया च यत् प्रोक्तं तदेव सफलं भवेत् ।
तपसा यन्त्रितो दैत्य तस्माद्दत्तं मया परम् ॥ ३३॥

एवमुक्त्वार्यमा लोकमगमद्दुःखसंयुतः ।
क्रोधो हर्षसमाविष्टः प्रययौ स्वगृहं ततः ॥ ३४॥

सुहृदो नन्दयामासासुरान् सर्वान् महायशाः ।
काव्यं प्रणम्य स्वस्थाने संस्थितोऽभून्‍न मदान्वितः ॥ ३५॥

हर्षः शोकश्च पुत्रौ द्वौ प्रीत्यामुत्पाद्य दैत्यपः ।
नानाभोगान् प्रभुञ्जानो गर्वितोऽभूत्ततः परम् ॥ ३६॥

शुक्रं सकलनीतिज्ञं समानाय्य प्रपूज्य तम् ।
तस्यानुमतमागृह्य नगरं निर्ममेऽसुरः ॥ ३७॥

आवेशनामकं रम्यं सर्वशोभासमन्वितम् ।
तत्राजग्मुश्च विप्रर्षे दानवा दैत्यराक्षसाः ॥ ३८॥

चातुर्वर्ण्यसमायुक्ता निवासं चक्रिरे पुरा ।
जना हर्षयुतास्तत्र मुमुदुः ससुहृद्गणाः ॥ ३९॥

ततः काव्यः समागत्य क्रोधं चकार विप्रपैः ।
अभिषिक्तं स सर्वेषां दानवानां पदे प्रभुम् ॥ ४०॥

ततः क्रोधस्य तत्पुर्यां प्रधानाः पञ्च दारुणाः ।
बभूवुः सर्वनीतिज्ञा महामाया महाबलाः ॥ ४१॥

बलिर्जृम्भस्तथा राहू रावणो माल्यवान् परः ।
तैर्युक्तः शुशुभेऽत्यन्तं क्रोधः परमदारुणः ॥ ४२॥

अन्ये प्रहस्तमुख्याश्च राक्षसा दानवास्तथा ।
सिषेविरे भावयुक्ता महाक्रोधं महाबलाः ॥ ४३॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पञ्चमे खण्डे लम्बोदरचरिते क्रोधासुरराज्यप्राप्तिवर्णनं नाम तृतीयोऽध्यायः ॥ ५.३

## ५.४ क्रोधासुरब्रह्माण्डविजयो नाम चतुर्थोऽध्यायः

॥ श्रीगणेशाय नमः ॥

ब्रह्मोवाच ।
ततः किञ्चिद्गते काले क्रोधो हर्षसमन्वितः ।
उवाच बलिमुख्यांश्च दानवान् गर्वपूरितः ॥ १॥

क्रोधासुर उवाच ।
शृणुध्वं दानवाः सर्वे बलिमुख्या महाबलाः ।

ब्रह्माण्डं प्रजयिष्यामि भवद्भिः संयुतो ह्यहम् ॥ २॥

तस्य तद्वचनं श्रुत्वा दैत्याः संहर्षिता नृपम् ।
जगुस्तं भक्तिसंयुक्ता कृत्वा करपुटं वचः ॥ ३॥

बल्याद्या ऊचुः ।
सम्यगुक्तं त्वया नाथ प्रजेष्यामः सुराधिपान् ।
त्वत्प्रसादेन दैत्येश आज्ञापय महासुरान् ॥ ४॥

पराक्रमतुलां ते न तिष्ठन्ति ब्रह्मगोलके ।
निर्भयोऽसि महाराज जय त्वं सर्वदेवपान् ॥ ५॥

तेषां वचनमाकर्ण्याऽसुरः क्रोधः प्रहर्षितः ।
शुक्रं नत्वा समानाय्य बभौ तेनानुमोदितः ॥ ६॥

ततो दैत्यगणान् सर्वानाजुहाव नरैः स्वकैः ।
ते सर्वे हर्षसंयुक्ता आययुस्तं नराधिपम् ॥ ७॥

ततः सैन्यसमायुक्तो निर्जगाम महासुरः ।
चतुरङ्गबलैर्युक्तोऽपारैः सर्वत्र सम्बभौ ॥ ८॥

रथस्थश्च स्वयं क्रोधो दैत्यपैः संवृतो बभौ ।
तत्रादौ पृथिवीं जेतुं ययौ भूमण्डले नृपान् ॥ ९॥

बलिमुख्यैर्महावीरैः स्थितैर्यत्र च मानदौ ।
तैर्युद्धं कः पुमान् भूमौ कर्तुं शक्तो भवेत्तदा ॥ १०॥

राजानः शरणं जग्मुर्दैत्येन्द्रभयपीडिताः ।
केचिन् मृताश्च तैर्युद्धं कृत्वाऽहङ्कारसंयुताः ॥ ११॥

केचिद्राज्यं परित्यज्य सुदारुणवनं ययुः ।
एवं वसुन्धरां जित्वा मुमुदुः सप्तसागराम् ॥ १२॥

राज्ञस्ते करदांश्चक्रुर्दैत्याः शरणमागतान् ।
मृतास्तेषां सुताः सर्वे करदान् स्थाप्य चक्रिरे ॥ १३॥

वनेषु ये गतास्तेषु दैत्याः संस्थापिताश्च तैः ।
बभुः संस्थापिता दैत्याः सर्वत्र नगरेषु वै ॥ १४॥

ततः पातालल्लोकेषु ययुर्दैत्येन्द्रमुख्यकाः ।
क्रोधासुरसमायुक्ता जेतुं नागान् महाबलान् ॥ १५॥

दूतमुखेन वृत्तान्तं ज्ञात्वा शेष उदारधीः ।
वरगर्वसमायुक्तं क्रोधं ज्ञात्वा ययौ स्वयम् ॥ १६॥

समागतं महानागैः शेषं ज्ञात्वा समावृतम् ।
क्रोधासुरः प्रसन्नात्मा मान्य तं सादरोऽभवत् ॥ १७॥

करभारं वार्षिकं स वृतः स्वीकृत्य नागपैः ।
दत्त्वा रत्नादिकं शेषो ययौ स्वस्थानमेव च ॥ १८॥

ततः स दैत्यपैः सर्वैर्ययौ शुक्रेण पालितः ।
देवस्थानेषु सर्वेषु देवोद्यानान्यभञ्जयत् ॥ १९॥

ततो दूतं महादैत्यः प्रेषयामास हर्षितः ।
जगाद मघवन्तं च स गत्वा चेष्टितं महत् ॥ २०॥

बृहस्पतिं च देवेन्द्रैस्तत इन्द्रः समाययौ ।
तेन संज्ञापितः सर्वैः प्रपपाल गुहान्तरम् ॥ २१॥

तज्ज्ञात्वा दैत्यपैः सर्वैर्हर्षितः क्रोधकोऽसुरः ।
आययावमरावत्यामिन्द्रासनस्थितोऽभवत् ॥ २२॥

देवस्थानानि सर्वाणि विभज्य प्रददौ स्वयम् ।
असुरेभ्यो महादैत्यस्तेषु दैत्याः स्थिता बभुः ॥ २३॥

नाना भोगान् प्रभुञ्जाना देवसौख्यकरान् मुनी ।
अन्योन्यस्नेहसंयुक्ता बभूवुः साहसप्रियाः ॥ २४॥

गन्धर्वाश्चारणाद्याश्चाप्सरसस्तान् सिषेविरे ।
दुःखयुक्ता विशेषेण देवैर्हीना महामुनी ॥ २५॥

ततः कदाचिद्दैत्येन्द्रो दैत्यपैः संवृतो ययौ ।
सत्यलोकं सुविख्यातं ज्ञात्वा ब्रह्मा पपाल ह ॥ २६॥

तत्रैव संस्थितो दैत्यः क्रोधः परमदारुणः ।
बुभुजे सत्यलोकोत्थान् भोगान् दैत्यैर्महाबलैः ॥ २७॥

ततो विकुण्ठमेवं स जगामासुरसंवृतः ।
ज्ञात्वा तत्र स्थितो विष्णुः पपाल क्रोधभीतितः ॥ २८॥

तत्र स्थित्वा विकुण्ठस्य भोगान् विष्णुकृतान् स्वयम् ।

बुभुजे ज्ञातिभिः सार्धं क्रोधः परमदारुणः ॥ २९॥

ततः कैलासकं दैत्यः शङ्करं जेतुमाययौ ।
महादेवः पपालैव क्रोधसन्तापतापितः ॥ ३०॥

तत्रस्थः क्रोधको दैत्यो ननन्द हृदि चाद्भुतम् ।
दैत्यैः समावृतः क्रूरस्तान् जगाद बलान्वितः ॥ ३१॥

क्रोधासुर उवाच ।
बले रावणमुख्याश्च शृणुध्वं मे वचो हितम् ।
अधुना न जितं स्थानं वदताऽहं जयामि तत् ॥ ३२॥

दैत्येन्द्रा ऊचुः ।
सर्वं जितं त्वया राजन् भानुरेकः सुराधिपः ।
न जितः स तदर्थं त्वं प्रयतस्वाऽसुराधिप ॥ ३३॥

जगाद क्रोधको दैत्यस्ततस्तान् हर्षसंयुतः ।
इष्टदेवं मदीयं तं भानुं त्यजत दैत्यपाः ॥ ३४॥

(Page खं. ५ अ. ५ पान ९)
तस्य तद्वचनं श्रुत्वा क्षोभयुक्ता महासुराः ।
जगुस्तं मायया युक्ताः क्रोधं भेदपरायणाः ॥ ३५॥

अस्माकमिष्टदेवोऽयं सूर्यः स्वामिन्न संशयः ।
भजिष्यामो विशेषेण तं सदा भक्तिलालसम् ॥ ३६॥

देवानां पक्षमुत्सृज्येच्छत्यस्माकं हितं यदि ।
तदा वन्द्योऽर्यमा नाथ नान्यथा जय तं बलात् ॥ ३७॥

परपक्षाश्रितं देवमस्मत्संहनने रतम् ।
जयिष्यामो वयमतो हितं राजन् समाचर ॥ ३८॥

दैत्येशानां वचः श्रुत्वा क्रोधः संहर्षितोऽभवत् ।
दूतं सम्प्रेषयामास रावणं गर्वसंयुतम् ॥ ३९॥

रावणात् सर्ववृत्तान्तं ज्ञात्वा भानुः प्रतापवान् ।
तमुवाच तदा क्रुद्धो भयभीतश्च मानदौ ॥ ४०॥

रविरुवाच ।
देवानां पक्षमुत्सृज्य क्रोधासुरपरायणः ।

न भविष्यामि भो दूत देवोऽहं नात्र संशयः ॥ ४१॥

उन्मत्तं वरसंयुक्तं क्रोधं वद महामते ।
त्यक्त्वा राज्यं वने भानुर्गतो राज्यं कुरुष्व च ॥ ४२॥

एवमुक्त्वा रावणं स सूर्यः सर्वसमन्वितः ।
पपाल लोकमुत्सृज्य रावणस्तं समाययौ ॥ ४३॥

ततोऽतिहर्षितो दैत्यः क्रोधो दुष्टैः समावृतः ।
आययौ सौरलोकं तं मुमुदे प्राप्य दुर्जनः ॥ ४४॥

आत्मानं कृतकृत्यं स मानयामास दुर्मतिः ।
ब्रह्माण्डविजयी भूत्वा भोगांश्च बुभुजे परान् ॥ ४५॥

ततः संस्थाप्य दैत्येन्द्रान् तेषु स्वर्गेषु दैत्यपः ।
पृथिव्यां नगरं मुख्यमाययौ प्रीतिसंज्ञकम् ॥ ४६॥

क्रोधासुरोऽसौ तत्रस्थः प्रशशास प्रतापवान् ।
त्रैलोक्यं भोगसंयुक्तः सुहृदानन्ददायकः ॥ ४७॥

स्त्रीमांसमदिरासक्तो बभूव विषयप्रियः ।
न बुबोध गतं कालं यथाकालेन वञ्चितः ॥ ४८॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
पञ्चमे खण्डे लम्बोदरचरिते क्रोधासुरब्रह्माण्डविजयो नाम चतुर्थोऽध्यायः ॥ ५.४

## ५.५ देवर्षिवरप्रदानं नाम पञ्चमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

ब्रह्मोवाच ।
ततोऽतिमदसंयुक्तोऽसुरः क्रोधः प्रतापवान् ।
दैत्यानाज्ञापयत् क्रूरान् कर्मणः खण्डनाय तान् ॥ १॥

तस्याज्ञया ययुर्दैत्या यत्र तत्र महीतले ।
ब्राह्मणांस्ताडयामासुर्वर्णाश्रमप्रवर्तकान् ॥ २॥

अन्यान् वर्णांस्तथा गृह्य कर्महीनांश्च चक्रिरे ।
देवतीर्थादिकं दैत्या बभञ्जुर्यज्ञवृक्षकान् ॥ ३॥

सर्वत्र त्रासिता लोकाः कर्महीना बभूविरे ।

न स्वाहा न स्वधा कुत्र न वषट्कार एव च ॥ ४॥

ततो विप्रानुवाचाऽथ क्रोधासुरः प्रतापवान् ।
मदीयनामसंयुक्तं कर्म कुर्वन्तु विप्रपाः ॥ ५॥

जगदीशो महाभागा अहं द्विजा न संशयः ।
भजतां पादयोर्मे नो दुर्लभं किं भविष्यति ॥ ६॥

ततो द्विजास्तपोनिष्ठा गता वनेषु मानदौ ।
त्यक्त्वा विषयजं सौख्यं सिंहव्याघ्रयुतेषु ते ॥ ७॥

केचिद् भ्रष्टास्तदाज्ञायां संस्थिता दुःखसंयुताः ।
(Page खं. ५ अ. ५ पान १०)
वर्णाश्रमविहीनाश्च जनाः सर्वे बभूविरे ॥ ८॥

सर्वत्र क्रोधकस्यैव प्रतिमा स्थापिताऽभवत् ।
गृहे गृहे तथा तस्याऽसुरैः पूजा प्रवर्तिता ॥ ९॥

एवं हा हा कृतं सर्वं त्रैलोक्यं तेन वैरिणा ।
देवाः सर्वे भयोद्विग्ना बभूवुः कर्मखण्डनात् ॥ १०॥

कर्मखण्डनभावेनोपोषणैः संयुताः सुराः ।
ततस्तस्य विनाशार्थं यत्नवन्तो बभूविरे ॥ ११॥

न प्रापुस्तस्य शान्त्यर्थमुपायं ते सुरेश्वराः ।
ततोऽतिखेदसंयुक्ता बभूवुस्त्रासकम्पिताः ॥ १२॥

एतस्मिन्नन्तरे तत्र वसिष्ठो योगिनां वरः ।
जगाद तान् सुरेशानान्निःश्वस्य हितकारकः ॥ १३॥

वसिष्ठ उवाच ।
उत्पत्तिस्थितिसंहारैर्वयं युक्ता न संशयः ।
अस्मभ्यो मरणं तस्य न भविष्यति निश्चितम् ॥ १४॥

स्वानन्दवासकरणं गणेशं ब्रह्मनायकम् ।
त्रिभिर्हीनं जगुर्वेदास्तं सेवध्वं सुरेश्वराः ॥ १५॥

हत्वा क्रोधासुरं सोऽपि स्वपदानि प्रदास्यति ।
अस्मभ्यं नात्र सन्देहं कुर्वन्तु प्रयताः सुराः ॥ १६॥

वसिष्ठवचनं श्रुत्वा हर्षयुक्ताः सुरर्षयः ।

साधु साधु मुनि सर्वे जगुर्ज्ञाननिधिं परम् ॥ १७॥

ततस्ते मन्त्रराजं वै जेपुर्लम्बोदरस्य च ।
भक्तियुक्तास्तपोनिष्ठा ध्यानसंस्था बभूविरे ॥ १८॥

नानानुष्ठानयोगैश्चातोषयंस्ते गजाननम् ।
उपोषणपराः सर्वे विधियुक्ता महामुनी ॥ १९॥

एवं वर्षसहस्रे च प्रगते तोषसंयुतः ।
लम्बोदरः प्रसन्नात्मा तान् ययौ वरदायकः ॥ २०॥

समागतं गणेशानं दृष्ट्वा देवर्षयः पुरः ।
उत्थाय हर्षसंयुक्ताः प्रणेमुर्दण्डवद्भुवि ॥ २१॥

पुपूजुर्भक्तिसंयुक्ताः प्रभुं नानोपचारकैः ।
पुनः प्रणम्य सन्तुष्टास्तुष्टुवुः करसम्पुटैः ॥ २२॥

देवर्षय ऊचुः ।
नमस्ते गणनाथाय लम्बोदरधराय च ।
गजवक्त्राय सर्वेषां नमः पूज्याय ते नमः ॥ २३॥

स्वानन्दपतये तुभ्यं सर्वस्वानन्ददायिने ।
अनाथाय च सर्वेषां नायकाय नमो नमः ॥ २४॥

नमो विघ्नेश्वरायैव भक्तविघ्नविनाशिने ।
अभक्तानां महाविघ्नकारकाय नमो नमः ॥ २५॥

उत्पत्तिस्थितिसंहारहीनाय सर्वरूपिणे ।
अनादये परेशाय महोदर नमोऽस्तु ते ॥ २६॥

मायिनां मोहकायैव मायाविने परात्मने ।
सर्वसिद्धिप्रदायैव नानाविद्याकलात्मने ॥ २७॥

अपाराननरूपायापारहस्तपदाय च ।
गुणेशाय गुणानां ते चालकाय नमो नमः ॥ २८॥

आदिमध्यान्तरूपायादिमध्यान्तस्वरूपिणे ।
अनाकाराय ते चाकारयुक्ताय नमो नमः ॥ २९॥

ज्येष्ठराजाय ज्येष्ठानां पतये सर्वदायिने ।
आदिपूज्याय चान्ते ते संस्थिताय नमो नमः ॥ ३०॥

नानाविधं जगत् सर्वं ब्रह्म नानाविधं प्रभो ।
सम्भूतमुदरात्ते वै तेन लम्बोदरो भवान् ॥ ३१॥

तवोदरभवाः सर्वे त्वं न कस्योदरोद्भवः ।
तेन लम्बोदरोऽसि त्वं लम्बोदर नमोऽस्तु ते ॥ ३२॥

सर्वेषामुदराणां त्वं पारं जानासि विघ्नप ।
उदरस्य न कस्तेऽपि पारं जानाति ते नमः ॥ ३३॥

एतादृशोऽयमानन्दानामानन्दप्रदायकः ।
प्रत्यक्षं दृष्टिगो जातोऽस्माकं धन्या वयं ततः ॥ ३४॥

(Page खं. ५ अ. ५ पान ११)
मनोवाणीविहीनो न मनोवाणीमयो न च ।
लम्बोदरः समायात आश्चर्यं भाति ते नमः ॥ ३५॥

किं स्तुवीमः गणेशानं यत्र वेदादयः प्रभो ।
शान्तिं प्राप्ता वयं तत्र नः प्रसीद नमो नमः ॥ ३६॥

एवमुक्त्वा सुराः सर्वे ननृतुर्मुनयस्तथा ।
तानुवाच गणेशानो मेघगम्भीरनिःस्वनः ॥ ३७॥

लम्बोदर उवाच ।
वरं ब्रूत महाभागा देवेन्द्रा मुनयोऽमलाः ।
तपसा मनसाऽभीष्टं भक्त्या तुष्टो ददाम्यहम् ॥ ३८॥

भवत्कृतं मदीयं यत् स्तोत्रं सर्वप्रदं भवेत् ।
पठते शृण्वते चेहामुत्र सौख्यप्रदं परम् ॥ ३९॥

यद्यदिच्छति तत्तद्वै दास्यामि स्तोत्रपाठतः ।
नानासिद्धिप्रदं चास्तु मम भक्तिविवर्धनम् ॥ ४०॥

ब्रह्मोवाच ।
लम्बोदरवचः श्रुत्वा हृष्टा देवर्षयोऽभवन् ।
जगुस्तं प्रणिपत्यैव सर्वेशं भक्तपालकम् ॥ ४१॥

देवर्षय ऊचुः ।
यदि प्रसन्नभावेन वरदोऽसि गजानन ।

तदा क्रोधासुरं नाथ मारयस्वाधुना प्रभो ॥ ४२॥

स्थानभ्रष्टा वयं तेन कृताः कर्मविहीनकाः ।
ऋषयश्च जगत् सर्वं स्वधास्वाहाविवर्जितम् ॥ ४३॥

अतो लम्बोदर स्वामिंस्तवोदरसमुद्भवान् ।
एकं हत्वा तथा सर्वान् रक्ष स्वभक्तकान् प्रभो ॥ ४४॥

भक्तिं देहि त्वदीयां नः सर्वक्रोधविनाशिनीम् ।
तया शान्तिसमायुक्ता भजिष्यामो विशेषतः ॥ ४५॥

तव भक्तिर्यदा प्राप्ता लम्बोदर तदा शुभम् ।
भुनक्ति सर्वदा स्वामिन् ब्रह्मभूतः स वै स्मृतः ॥ ४६॥

सर्वं मुनीनां देवानां वचः श्रुत्वा महाप्रभुः ।
लम्बोदरश्च तान् प्राह तथेति भक्तियन्त्रितः ॥ ४७॥

ततः सोंऽतर्हितो देवो देवास्तत्रैव संस्थिताः ।
मुनयश्च भयोद्विग्नाः कालकाङ्क्षां प्रचक्रिरे ॥ ४८॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पञ्चमे खण्डे लम्बोदरचरिते देवर्षिवरप्रदानं नाम पञ्चमोऽध्यायः ॥ ५.५

## ५.६ देवासुरयुद्धवर्णनं नाम षष्ठोऽध्यायः

॥ श्रीगणेशाय नमः ॥

ब्रह्मोवाच ।
विश्वामित्रवसिष्ठौ च शृणुतं परमाद्भुतम् ।
चरितं गणनाथस्य महाशान्तिप्रदायकम् ॥ १॥

कदाचित् क्रोधको दैत्यः सभासनगतोऽभवत् ।
तत्राकाशभवां वाणीं शुश्राव भयदायिनीम् ॥ २॥

लम्बोदरश्च मुनिभिर्देवैः सार्धं वधाय ते ।
प्रार्थितः स तु हत्वा त्वां जगत् सुखि करिष्यति ॥ ३॥

तच्छ्रुत्वा मूर्च्छितं क्रोधं सहसा भयविह्वलम् ।
तं दैत्येन्द्राश्च विप्रर्षी सावधानं प्रचक्रिरे ॥ ४॥

शोकयुक्ता विशेषेण पप्रच्छुस्तं महासुराः ।

बल्याद्या भयभीताश्च किं जातं वद मानद ॥ ५॥

दैत्येशानां वचः श्रुत्वा भययुक्तो महासुरः ।
जगाद तान् स वृत्तान्तमाकाशे वाक्समुद्भवम् ॥ ६॥

तच्छ्रुत्वा कुपिता दैत्यास्तमूचुर्मदसंयुताः ।
(Page खं. ५ अ. ६ पान १२)
देवान् मुनिगणान्नाथ हनिष्यामोऽद्य निश्चितम् ॥ ७॥

अस्माकं शत्रवो देवास्तैः कृतं दारुणं महत् ।
आज्ञापय महाभाग सर्वान् देवजिघांसया ॥ ८॥

ततोऽतिहर्षितः क्रोधः स्वयं युद्धाय सज्जितः ।
दैत्येशैः संवृतः सद्यो ययौ शैलेन्द्रमुख्यकम् ॥ ९॥

समागतं महाक्रोधं दैत्येशैः संवृतं ततः ।
देवाः सर्वे भयोद्विग्नाः सस्मरुर्गणनायकम् ॥ १०॥

तेषां स्मरणमात्रेण लम्बोदरः प्रतापवान् ।
मूषकारूढ एवासावागतोऽभून् महाप्रभुः ॥ ११॥

पाशादिशस्त्रसंयुक्तं सिद्धिबुद्धिसमन्वितम् ।
नाभिशेषं त्रिनेत्रं तं ददृशुश्च सुरर्षयः ॥ १२॥

ततस्तं ते प्रणेमुर्वै भयं त्यक्त्वा सुहर्षिताः ।
स्तुत्वा वृत्तान्तमुग्रं तं कथयामासुरादृताः ॥ १३॥

श्रुत्वा वृत्तान्तमुग्रं स तान् जगाद सुराधिपान् ।
लम्बोदरः प्रसन्नात्मा मुनीन् क्रोधयुतः प्रभुः ॥ १४॥

लम्बोदर उवाच ।
मा भयं कुरुत प्राज्ञा हनिष्यामि महासुरम् ।
स्वधर्मस्थान् जनान् सर्वान् करिष्यामि न संशयः ॥ १५॥

ततः क्रोधासुरस्तत्र समीपे समुपागतः ।
दृष्ट्वा लम्बोदरं देवं भयभीतो बभूव ह ॥ १६॥

उवाच दैत्यपांस्तत्र सत्या वाक् सा न संशयः ।
अयं लम्बोदरो नूनं देवैः सम्प्रार्थ्यतेऽसुराः ॥ १७॥

तस्य तद्वचनं श्रुत्वा दैत्याः क्रोधारुणेक्षणाः ।

ऊचुस्तं दैत्यनाथं ते गर्वयुक्ता बलान्विताः ॥ १८॥

दैत्येशा ऊचुः ।
लम्बोदरयुतान् देवान् हनिष्यामो न संशयः ।
मा कुरुष्व वृथा चिन्तां रक्ष पृष्ठं महामते ॥ १९॥

देहधारी गणाध्यक्ष आगतो नात्र संशयः ।
उत्पत्तिनाशवान् देहः किं करिष्यति तेऽशुभम् ॥ २०॥

काव्यं दैत्यगणास्तत्र सस्मरुर्भक्तिसंयुताः ।
तेषां स्मरणमात्रेण स चापि ह्यागतोऽभवत् ॥ २१॥

तं प्रणम्य गुरुं दैत्या वृत्तान्तं सर्वमञ्जसा ।
कथयन्ति स्म तं श्रुत्वा शुक्रस्तान् प्रत्युवाच ह ॥ २२॥

शुक्र उवाच ।
सिद्धिपतिं परित्यज्य सिद्धिमिच्छति दुर्मतिः ।
तथा त्यक्त्वा बुद्धिपतिं स्फूर्तिमिच्छति मूर्खवत् ॥ २३॥

विघ्नराजं सदैकं यं तं त्यक्त्वा विघ्नहीनकाः ।
कथं भवन्ति वदत दैत्येन्द्रा मां विनिश्चयात् ॥ २४॥

अतो युद्धं परित्यज्य शरणं तस्य शोभनम् ।
भविष्यति न सन्देहो नोचेत् क्रोधो मरिष्यति ॥ २५॥

शुक्रस्य वचनं श्रुत्वा बलिस्तत्र जगाद तम् ।
कर्मणा सिद्धिदाताऽयं स्फूर्तिदाता भवत्यहो ॥ २६॥

कर्मणा विघ्नहीनत्वं सविघ्नं प्रकरोति च ।
अतो वयं महायोगिन् कर्मणा तं जयामहे ॥ २७॥

तस्य तद्वचनं श्रुत्वा सर्वे दैत्येन्द्रकादयः ।
साधु साध्वब्रुवंस्तत्र सङ्ग्रामायोद्यता बभुः ॥ २८॥

ततो भावि बलं वीक्ष्य काव्यस्तत्र मुनीश्वरौ ।
तूष्णीम्भावं समाधृत्य संस्थितोऽभूत् स योगवित् ॥ २९॥

देवाः सर्वे महास्त्रैस्ते युक्ताः क्रोधसमन्विताः ।
आययू रणभूमिं च दैत्येशाश्च तथा ययुः ॥ ३०॥

ततः परस्परं युद्धं बभूवे दारुणं महत् ।

दैत्यानां चैव देवानां परस्परविनाशनम् ॥ ३१॥

देवा दैत्या युयुधिरे कृत्वा मरणनिश्चयम् ।
(Page खं. ५ अ. ६ पान १३)
शस्त्रास्त्रैर्बलगर्वेण प्रेरिता रणदुर्मदाः ॥ ३२॥

वीराणामभवन्नादैर्वादित्राणां च वाजिनाम् ।
बृंहितानां च शङ्खानां दिशो नादयुतास्ततः ॥ ३३॥

सैन्यपादभवो रेणुश्छादयामास भास्करम् ।
नाभूत् स्वपरबोधोऽपि जघ्नुस्ते च परस्परम् ॥ ३४॥

ततो रक्तप्रवाहश्च सम्भूतः शस्त्रघाततः ।
रजःकणास्तेन सर्वे मज्जिता अभवन् मृधे ॥ ३५॥

ततः परस्परं दृष्ट्वा जघ्निरे क्रोधसंयुताः ।
देवाश्च दानवास्तद्वत् परस्परजये रताः ॥ ३६॥

दिनत्रयमभूद्युद्धं घोरं सर्वभयावहम् ।
ततो दैत्यगणाः सर्वे पपलुस्त्रासससंयुताः ॥ ३७॥

देवा हर्षयुतास्तत्र जय लम्बोदर प्रभो ।
ऊचुस्तान् हन्तुमायाता दैत्येशाः क्रोधसंयुताः ॥ ३८॥

बलिश्च रावणो जृम्भो माल्यवान् कुम्भकर्णकः ।
राहुश्चान्ये महावीराः सङ्ख्यातुं न प्रशक्यते ॥ ३९॥

तैः शस्त्रनिचयैर्देवाः संहताः पपलुस्तदा ।
हित्वा सङ्ग्रामभूमिं ते छिन्नभिन्नाः समन्ततः ॥ ४०॥

तत इन्द्रश्च सङ्क्रुद्धः शङ्करो विष्णुरेव च ।
सूर्यश्चन्द्रश्च देवेन्द्रा आययुः क्रोधसंयुताः ॥ ४१॥

तैरस्त्राणां महावृष्टिः कृता परमदारुणा ।
तया दैत्यगणाः सर्वे पपलुश्च दिशो दश ॥ ४२॥

ततोऽतिक्रोधसंयुक्ता रावणाद्याः समाययुः ।
द्वन्द्वयुद्धमभूद्घोरं सर्वेभ्यो भयदायकम् ॥ ४३॥

जृम्भो ययौ महेन्द्रेण राहुः सूर्येण संयुगे ।
बलिश्च विष्णुना क्रुद्धो रावणः शङ्करेण च ॥ ४४॥

कुम्भकर्णश्च चन्द्रेण नाना दैत्येन्द्रकादयः ।
देवेन्द्रैर्वायुमुख्यैश्च युयुधुर्जयकाङ्क्षिणः ॥ ४५॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पञ्चमे खण्डे लम्बोदरचरिते देवासुरयुद्धवर्णनं नाम षष्ठोऽध्यायः ॥ ५.६

## ५.७ क्रोधासुरसमागमो नाम सप्तमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

ब्रह्मोवाच ।
एकरात्रं महाघोरं युद्धं बभूव दारुणम् ।
ततो रक्तप्रवाहैश्च नद्यो जाता जलौघवत् ॥ १॥

न जयः प्राप्यते देवैर्नासुरैर्यमसन्निभैः ।
मघवा वज्रपातैस्तांश्चूर्णयामास दानवान् ॥ २॥

ततो जृम्भोऽतिसङ्क्रुद्धो गदामादाय दारुणाम् ।
युयुधे देवराजेन महाबलपराक्रमः ॥ ३॥

गदया देवराजं स मूर्च्छितं प्रचकार ह ।
ततो हाहाकृतं सर्वैर्देवसैन्यं पपाल तत् ॥ ४॥

इन्द्रः संज्ञासमायुक्तः पुनः संयुयुधे भृशम् ।
वज्रेण पातयामास जृम्भं तं धरणीतले ॥ ५॥

त्रिशूलेन हतस्तत्र रावणः पतितो भुवि ।
शङ्करेण ततः सर्वे पपलुर्दानवा मृधे ॥ ६॥

गदया विष्णुना तत्र बलिः सम्मूर्च्छितः कृतः ।
कुम्भकर्णश्च चन्द्रेण पीडितो मूर्च्छितोऽभवत् ॥ ७॥

राहुः सूर्येण सङ्ग्रामे तेजसा पीडितो भृशम् ।
पपात मूर्च्छया भूमौ हा हा कृत्वा महामुनी ॥ ८॥

(Page खं. ५ अ. ७ पान १४)
द्वन्द्वयुद्धं परे ये ये ह्यकुर्वन्नमरैर्बलात् ।
ते ते सर्वे च देवेन्द्रैर्जिताः सर्वे पलायिताः ॥ ९॥

भक्तवत्सलभावेन शङ्करो विष्णुरञ्जसा ।
रावणं च बलिं तत्र चक्रतुर्न मृतौ मृधे ॥ १०॥

ततोऽतिकोपसंयुक्ता देवेन्द्राः शस्त्रवृष्टिभिः ।
असुरान् मारयामासुः सर्वत्र भयसंयुतान् ॥ ११॥

प्रलयं मेनिरे तत्र दैत्यास्त्रासससमाकुलाः ।
देवांस्ते शरणं जग्मुः केचित् प्राणपरीप्सया ॥ १२॥

जय लम्बोदर स्वामिन् जय विघ्नेश देवप ।
हेरम्ब वक्रतुण्ड त्वं जयेत्यूचुः प्रहर्षिताः ॥ १३॥

दैत्यानां कदनं दृष्ट्वा क्रोधः परमविस्मितः ।
निःश्वस्य चिन्तया युक्तो बभूवे किं भविष्यति ॥ १४॥

पितुः शोकं विदित्वा तौ हर्षः शोकश्च संयुगे ।
ययतुः शस्त्रवर्षेण ववर्ष तौ घनौ यथा ॥ १५॥

तयोरमोघरूपैश्च शस्त्रैर्देवा हता मृधे ।
छिन्नाङ्गाः पपलुस्तत्र दैत्यसन्त्रासतापिताः ॥ १६॥

इन्द्रं च सहसाऽऽगत्य शोकः परमदारुणः ।
चकार मूर्च्छितं सद्यो गदया मूर्ध्नि घाततः ॥ १७॥

सङ्गृह्य स्वबले सोऽपि स्थापयामास देवपम् ।
ततः शुक्रेण दैत्येन्द्रा विद्यया नीरुजाः कृताः ॥ १८॥

बलिमुख्या ययुः सङ्ग्रामं पुनश्च महामुनी ।
चक्रेण सहसा हर्षश्चन्द्रं चक्रे स मूर्च्छितम् ॥ १९॥

ततः कोपसमायुक्तः शङ्करो युयुधे भृशम् ।
त्रिशूलेन महादैत्यान् जघान सकलान् प्रभुः ॥ २०॥

शङ्करस्य बलं वीक्ष्य हर्षस्तत्र समाययौ ।
युयुधे तेन दैत्येन्द्रपुत्रस्तेजस्विनां वरः ॥ २१॥

नानाविधं महाघोरं युद्धं बभूव दारुणम् ।
हर्षस्य शङ्करस्यैव परस्परजयैषिणोः ॥ २२॥

ततस्त्रिशूलघातेन शङ्करस्तं जघान ह ।
पतितं मूर्च्छितं हर्षं दृष्ट्वा दैत्या भयातुराः ॥ २३॥

पतितान् दैत्यपान् दृष्ट्वा काव्यस्तत्र समागतः ।
हर्षं मूर्च्छाविहीनं वै चकार स्वेन तेजसा ॥ २४॥

ततो हर्षसमायुक्ता दैत्येन्द्रा युयुधुर्भृशम् ।
विष्णुस्तेषां बलं वीक्ष्य चक्रं मुमोच दारुणम् ॥ २५॥

चक्रेण क्षुरधारेण हता दैत्या अनेकशः ।
प्रपेलुर्भयसंयुक्ताश्छिन्नभिन्नाङ्गका मृधे ॥ २६॥

ततः शोकः समायातः शूलं मुमोच तैजसम् ।
आगत्य सहसा विष्णोः पपात हृदि विप्रपौ ॥ २७॥

ततः सम्मूर्च्छितस्तत्र पपात च जनार्दनः ।
दैत्या हर्षयुताः सर्वे नादं चक्रुर्महारणे ॥ २८॥

ततो हर्षो महाक्रोधाद्गदया मृत्युकल्पया ।
चकार शङ्करं तत्र पतितं मूर्च्छया भृशम् ॥ २९॥

ततो हा हा रवं कृत्वा देवाः सर्वे पराजिताः ।
प्रपेलुः सर्वदेवेन्द्रा दैत्याभ्यां त्रासिता बलात् ॥ ३०॥

तद् दृष्ट्वा परमाश्चर्यं लम्बोदरः प्रतापवान् ।
अङ्कुशं क्रोधसंयुक्तो मुमोच दैत्यमण्डले ॥ ३१॥

तेजोरूपं महास्त्रं तद् दृष्ट्वा दैत्या विसिस्मिरे ।
यावत्तावच्च दैत्येन्द्रौ हतौ हर्षश्च शोककः ॥ ३२॥

मायया गणनाथश्च शुक्रं गृह्य गुहान्तरे ।
चिक्षेप च ततः सर्वे प्रपेलू राहुमुख्यकाः ॥ ३३॥

ततोऽतिकोपसंयुक्तः क्रोधः स्वयमुपागतः ।
पुत्रशोकं हठात् गृह्य बाणवृष्टिं चकार ह ॥ ३४॥

(Page खं. ५ अ. ८ पान १५)
तद्बाणैरपि तत्रस्था देवाः सर्वे महामुनी ।
छिन्नाङ्गा अपलन् सद्यो हाहाकाररवा दिशः ॥ ३५॥

लम्बोदरः समाश्वास्य देवेशस्तान् प्रतापवान् ।
आययौ रणभूमिं स पाशहस्तोऽसिधारकः ॥ ३६॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पञ्चमे खण्डे लम्बोदरचरिते क्रोधासुरसमागमो नाम सप्तमोऽध्यायः ॥ ५.७

## ५.८ क्रोधासुरशान्तिवर्णनं नामाऽष्टमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

ब्रह्मोवाच ।
लम्बोदरं महादैत्यः समालोक्य रणं गतः ।
जगाद क्रोधसंयुक्तः क्रोधः सर्वविचारवित् ॥ १॥

क्रोधासुर उवाच ।
लम्बोदर महामूर्ख किमर्थं रणमागतः ।
देवानां हितमिच्छन् सन् मरिष्यसि च मेऽग्रतः ॥ २॥

येन ब्रह्माण्डगं पूर्णं जितं देवादयः कृताः ।
पशुतुल्या वने संस्था जेतुमिच्छसि तं मुधा ॥ ३॥

मम क्रोधो दहेत् सर्वं त्रैलोक्यं सचराचरम् ।
तत् पुरः कथमायातः सङ्ग्रामाय सुयन्त्रितः ॥ ४॥

त्वया मदीयकं सैन्यं हतं पुत्रौ हतौ तथा ।
अधुना शोकसंयुक्तो हनिष्यामि मदान्वितम् ॥ ५॥

शरणं याहि मां नो चेन् मरिष्यसि गजानन ।
उदरं स्फोटयिष्यामि बाणेनैकेन ते महत् ॥ ६॥

इत्यादि विविधैर्वाक्यैर्लम्बोदरं महासुरः ।
भर्त्सयामास तं देवो जगाद मदसंयुतम् ॥ ७॥

लम्बोदर उवाच ।
किं मां वदसि दैत्येन्द्र हनिष्यामि महाखलम् ।
त्वां धर्मस्य निहन्तारं स्वधर्मस्थापको ह्यहम् ॥ ८॥

सूर्यदत्ताद् वराद् दुष्ट दुष्टकर्मरतो भवान् ।
अतिपापैश्च तत् सर्वं निष्फलं ते बभूव ह ॥ ९॥

उत्पत्तिनाशयुक्तेभ्यो मरणं नैव ते भवेत् ।
नाऽहं जातो न दैत्येन्द मरिष्यामि कदाचन ॥ १०॥

ब्रह्मभूतं च मां विद्धि सदा स्वानन्दवासिनम् ।
कथं जेष्यसि तं दुष्ट मनोवाणीविवर्जितम् ॥ ११॥

लम्बोदरस्य वचनं श्रुत्वा तत्तस्य धीमतः ।
उवाच विस्मितो भूत्वा तं पुनर्दैत्यनायकः ॥ १२॥

क्रोधासुर उवाच ।
न जातोऽसि यदा ब्रह्मन् कथं देहधरोऽसि वै ।
मनोवाणीविहीनश्चेत् कथं पश्यामि मां वद ॥ १३॥

लम्बोदर उवाच ।
इयं मदीयवामांऽगे सिद्धिर्भ्रान्तिस्वरूपिका ।
सिद्ध्यर्थं सर्वलोकाश्च भ्रमन्ति भ्रान्तिसंयुताः ॥ १४॥

दक्षिणांऽगे स्वयं बुद्धिः संस्थिता भ्रान्ति धारिणी ।
बुध्या बुध्या पुनस्तत्र भ्रान्तो भवति मानवः ॥ १५॥

चित्तरूपा स्वयं बुद्धिः पञ्चधा परिकीर्तिता ।
पञ्चभ्रान्तिमयी सिद्धिस्तयोः पतिरहं किल ॥ १६॥

नाना विश्वं महादैत्य नाना ब्रह्म तथा सदा ।
मदीयोदरगं विद्धि तेन लम्बोदरः स्मृतः ॥ १७॥

ममोदरात् समुत्पन्नं मया सम्पालितं तथा ।
अन्ते उदरगं कृत्वा क्रीडयामि निरन्तरम् ॥ १८॥

अतो मां शरणं गच्छ जीवितुं यदि वाञ्छसि ।
(Page खं. ५ अ. ८ पान १६)
शुक्रो मां वेत्ति तेन त्वं बोधितोऽपि न बुद्ध्यसे ॥ १९॥

नाऽहं दैत्यवधाकाङ्क्षी तथा देववधप्रियः ।
स्वस्वधर्मयुतान् सर्वान् पालयामि न संशयः ॥ २०॥

पाताले दैत्यपाः सर्वे नरा भूमौ सुरा दिवि ।
संस्थिताश्चेदहं दैत्य स्वानन्दस्थो भवामि च ॥ २१॥

देवाः क्रोधसमाविष्टा जघ्नुर्दैत्यान् विशेषतः ।
पातालस्थांस्ततोऽहं वै दैत्येभ्यः सिद्धिदोऽभवम् ॥ २२॥

पुनस्तपोयुता दैत्या जित्वा देवान् महाबलान् ।

कर्मखण्डनभावेन हन्तुमिच्छां प्रचक्रिरे ॥ २३॥

तदाऽहं देवसङ्घेभ्यः सिद्धिदाताऽभवं पुरा ।
तेन च्छिद्रज्ञका देवा जघ्नुः सर्वासुरान् पुनः ॥ २४॥

त्वया सर्वं जितं दैत्य देवमूलनिकृन्तनः ।
सर्वेन्द्रस्तेन भवसि त्वां हनिष्यामि निश्चितम् ॥ २५॥

तस्य तद्वचनं रम्यं श्रुत्वा क्रोधासुरः पुनः ।
विस्मितस्तं जगादैव हर्षनिर्भरमानसः ॥ २६॥

क्रोधासुर उवाच ।
नमामि त्वां गणाध्यक्ष सुरासुरमयं परम् ।
अधुना भक्तिसंयुक्तं पालयस्व शरण्यद ॥ २७॥

दर्शय स्वात्मरूपं मे सर्वसंशयनाशनम् ।
लम्बोदरार्थसंयुक्तं ब्रह्माकारं गजाननम् ॥ २८॥

लम्बोदरस्तस्य वाक्यं समाकर्ण्य सुहर्षितः ।
भक्तियुक्तं मनस्तस्य ज्ञात्वा रूपमदर्शयत् ॥ २९॥

ज्ञानचक्षुश्च सन्दत्तं तेन दैत्याय तं पुनः ।
लम्बोदरं महाक्रोधोऽपश्यत् परमविस्मितः ॥ ३०॥

ब्रह्मेशं प्रणनामाऽथ सरोमाञ्चो महासुरः ।
लम्बोदरः पुनस्तत्र पूर्वरूपो बभूव ह ॥ ३१॥

तत्र क्रोधासुरस्तं वै पूजयन् भक्तिसंयुतः ।
नत्वा तुष्टाव संहृष्टः साश्रुनेत्रः प्रतापवान् ॥ ३२॥

क्रोधासुर उवाच ।
लम्बोदर नमस्तुभ्यं शान्तियोगस्वरूपिणे ।
सर्वशान्तिप्रदात्रे ते विघ्नेशाय नमो नमः ॥ ३३॥

असम्प्रज्ञातरूपेयं शुण्डा ते नात्र संशयः ।
सम्प्रज्ञातमयो देहो देहधारिन्नमो नमः ॥ ३४॥

स्वानन्दे योगिभिर्नित्यं दृष्टस्त्वं ब्रह्मनायकः ।
तेन स्वानन्दवासी त्वं नमः संयोगधारिणे ॥ ३५॥

समुत्पन्नं त्वदुदराज्जगन्नानाविधं प्रभो ।

ब्रह्म तद्वन्न सन्देहो लम्बोदर नमोऽस्तु ते ॥ ३६॥

त्वदीयकृपया देव मया ज्ञातं महोदर ।
त्वत्तः परतरं नास्ति परेशाय नमो नमः ॥ ३७॥

हेरम्बाय नमस्तुभ्यं विघ्नहर्त्रे कृपालवे ।
आदिमध्यान्तहीनाय तन्मयाय नमो नमः ॥ ३८॥

सिद्धिबुद्धिविहारज्ञ सिद्धिबुद्धिपते नमः ।
सिद्धिबुद्धिप्रदात्रे ते वक्रतुण्डाय वै नमः ॥ ३९॥

सर्वात्मकाय सर्वादिपूज्याय ते नमो नमः ।
सर्वपूज्याय वै तुभ्यं भक्तसंरक्षकाय च ॥ ४०॥

अतः प्रसीद विघ्नेश दासोऽहं ते गजानन ।
लम्बोदराय नित्यं नमो नमस्ते महात्मने ॥ ४१॥

स्वत उत्थानपरत उत्थाने ब्रह्म धारयन् ।
तवोदरात् समुत्पन्नं तं किं स्तौमि परात्परम् ॥ ४२॥

इति स्तुत्वा महादैत्यः प्रणनाम गजाननम् ।
तमुवाच गणाध्यक्षो भक्तं भक्तजनप्रियः ॥ ४३॥

लम्बोदर उवाच ।
वरं वृणु महाभाग क्रोधासुर हृदीप्सितम् ।
दास्यामि भक्तिभावेन स्तोत्रेणाऽहं हि तोषितः ॥ ४४॥

(Page खं. ५ अ. ९ पान १७)
त्वया कृतमिदं स्तोत्रं सर्वसिद्धिप्रदं भवेत् ।
यः पठिष्यति तस्यैव क्रोधजं न भयं भवेत् ॥ ४५॥

शृणुयात्तस्य तद्वच्च भविष्यति न संशयः ।
यद्यदिच्छति तत्तद्वै दास्यामि स्तोत्रपाठतः ॥ ४६॥

क्रोधासुर उवाच ।
यदि लम्बोदर त्वं मे प्रसन्नो वरदोऽसि भोः ।
तदा त्वत्पादपद्मे च भक्तिं देहि दृढां प्रभो ॥ ४७॥

आज्ञां कुरु महाभाग सेवार्थं तां करोम्यहम् ।
स्थानं वृत्तिं च मे देहि देहपोषणकारिणीम् ॥ ४८॥

ब्रह्मोवाच ।
क्रोधासुरस्य वाक्यं तच्छ्रुत्वा हर्षसमन्वितः ।
लम्बोदरस्तं जगाद स पुनर्दैत्यनायकम् ॥ ४९॥

लम्बोदर उवाच ।
मदीया सुदृढा भक्तिः प्रभविष्यति तेऽनघ ।
वस त्वं भयहीनश्च स्थाने ते नात्र संशयः ॥ ५०॥

यत्रारम्भे महादैत्य मदीयं स्मरणं न हि ।
तत्र त्वं दैत्यभावेन कुरु राज्यं महामते ॥ ५१॥

तदीयपुण्यजं सर्वं भुङ्क्ष्व नित्यं सुकर्मजम् ।
ज्ञानादिसकलं तद्वत् त्वदीयं नात्र संशयः ॥ ५२॥

मद्भक्ता ये महादैत्य तान् रक्षस्व यथासुखम् ।
गाणपत्यप्रियस्त्वं वै भविष्यसि न संशयः ॥ ५३॥

एवमुक्तो महादैत्यः क्रोधः परमहर्षितः ।
लम्बोदरं प्रणम्यैव ययौ स्वस्थानमुत्तमम् ॥ ५४॥

दैत्या राहुमुखाः सर्वे तं त्यक्त्वा भयसंयुताः ।
पातालं विविशुर्विप्रो शुक्रः संहर्षितोऽभवत् ॥ ५५॥

एवं क्रोधासुरं शान्तं चकार गणनायकः ।
क्रोधो गणेशभक्तिं वै कुर्वन् सन् संस्थितोऽभवत् ॥ ५६॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
पञ्चमे खण्डे लम्बोदरचरिते क्रोधासुरशान्तिवर्णनं नामाऽष्टमोऽध्यायः ॥ ५.८

## ५.९ लम्बोदरदेवर्षिकृतस्तुतिवर्णनं नाम नवमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

ब्रह्मोवाच ।
एवं क्रोधासुरं शान्तं दृष्ट्वा देवर्षयोऽमलाः ।
हर्षयुक्ता विशेषेण पुपूजुर्गणनायकम् ॥ १॥

पूजयित्वा विधानेन नेमुर्लम्बोदरं पुनः ।
ततस्तं तुष्टुवुः सर्वे भक्तिनम्रात्मकन्धराः ॥ २॥

देवर्षय ऊचुः ।
श्रेष्ठं प्रधानं सकलादिभूतं सर्वान्तगं पूर्णमनन्तभावम् ।
नित्यं निजात्मानमचिन्त्यसंस्थं लम्बोदरं तं च वयं नताः स्मः ॥ ३॥

बोधेन हीनं स्वसुखे निमग्नं बीजात्मकं साङ्ख्यमनन्तवेद्यम् ।
वैदेहयोगेन च लभ्यमेवं लम्बोदरं तं च वयं नताः स्मः ॥ ४॥

जीवं परानन्दमयं परेशं बोधस्वरूपं प्रकृतेर्लयस्थम् ।
देहैर्विहीनं च तदात्महीनं लम्बोदरं तं च वयं नताः स्मः ॥ ५॥

सोऽहं सदाभेदविवर्जितं वै देहात्मयोगं सकलावभासम् ।
नित्यं पुराणं पुरुषं गणेशं लम्बोदरं तं च वयं नताः स्मः ॥ ६॥

बिन्दुस्वरूपं मनसाऽथ गम्यं पादैर्विहीनं च चतुष्पदं यम् ।
नानात्मभेदाश्रितमेकदन्तं लम्बोदरं तं च वयं नताः स्मः ॥ ७॥

नादस्वरूपं च गुणेशमेकं सर्वत्र चक्षुः श्रुतितुण्डभूतम् ।
(Page खं. ५ अ. ९ पान १८)
सर्वत्र हस्तोदरपादपद्मं लम्बोदरं तं च वयं नताः स्मः ॥ ८॥

संस्थं सुषुप्तौ समभावदं वै द्वन्द्वज्ञमाद्यं द्विविधावभासम् ।
आनन्दकन्दं तमसा विभान्तं लम्बोदरं तं च वयं नताः स्मः ॥ ९॥

सूक्ष्मस्वरूपं च तथान्तरस्थं सर्वज्ञमाद्यं गणनायकं यम् ।
विज्ञानकोशस्थविहारकारं लम्बोदरं तं च वयं नताः स्मः ॥ १०॥

स्थूलस्वरूपं सकलाभिमानं श्रेष्ठं रजोयुक्तमनन्तमाद्यम् ।
अन्नात्मभोगेषु विहारसिद्धं लम्बोदरं तं च वयं नताः स्मः ॥ ११॥

अध्यात्मरूपं तमसा चरन्तं द्रव्यप्रकाशं परमार्थभूतम् ।
देहेन्द्रियज्ञानमयं च ढुण्ढिं लम्बोदरं तं च वयं नताः स्मः ॥ १२॥

नित्यं रजोदेहविकारगं वै कर्मस्वरूपं विविधेन्द्रियस्थम् ।
तज्जाधिभूतात्मकमप्रमेयं लम्बोदरं तं च वयं नताः स्मः ॥ १३॥

ज्ञानस्वरूपं सकलामरस्थं सर्वेन्द्रियज्ञानकरं प्रभुं वै ।
तज्जाधिदैवप्रचुरं महान्तं लम्बोदरं तं च वयं नताः स्मः ॥ १४॥

आकाशरूपं सकलावभासं नादप्रचुरं सकलादिभूतम् ।
भूतैः सदा खेलकमादिनाथं लम्बोदरं तं च वयं नताः स्मः ॥ १५॥

वायुस्वरूपं जगदेकचालं प्राणादिसंस्थं स्वविभागदं यम् ।
देहप्रचारं दश नामभिश्च लम्बोदरं तं च वयं नताः स्मः ॥ १६॥

तेजःस्वरूपं सकलावभासं द्वन्द्वप्रचारं जठरे सुसंस्थम् ।
सन्धौ सदा व्याप्य विभागकारं लम्बोदरं तं च वयं नताः स्मः ॥ १७॥

जलस्वरूपं रसयुक्तमेव पुष्टिप्रदं षड्रसगं परेशम् ।
नित्यार्द्रभावस्य प्रकाशदं यं लम्बोदरं तं च वयं नताः स्मः ॥ १८॥

पृथ्वीस्वरूपं च धराधरेशं सर्वान्नमूलं विविधौषधिस्थम् ।
आकाररूपं च गजाननं वै लम्बोदरं तं च वयं नताः स्मः ॥ १९॥

विराड्वरूपस्थमनन्तपारं सर्वत्रनेत्रं च सहस्रशीर्षम् ।
सर्वत्र हस्ताननपादकादिं लम्बोदरं तं च वयं नताः स्मः ॥ २०॥

रजोयुतं सृष्टिकरं द्विजेशमादिस्वरूपं प्रपितामहं यम् ।
समानभावेन सुरासुरस्थं लम्बोदरं तं च वयं नताः स्मः ॥ २१॥

सत्त्वप्रचारं हरिरूपधारं यं तामसं शङ्करवेषसंस्थम् ।
सूर्यप्रचारं जगदम्बिकागं लम्बोदरं तं च वयं नताः स्मः ॥ २२॥

इत्यादिभेदैः सुविराजमानं सर्वैर्विहीनं तु कथं स्तुवीमः ।
देवाः शिवाद्याश्च विकुण्ठिता वै लम्बोदरं तं च वयं नताः स्मः ॥ २३॥

ब्रह्मोवाच ।
स्तुत्वा देवर्षयस्त्वेवं प्रणेमुस्ते गजाननम् ।
लम्बोदरस्तानुवाच महाभागान् सुसिद्धिदः ॥ २४॥

भवत्कृतमिदं स्तोत्रं भवेन् मत्प्रीतिवर्धनम् ।
पठतां शृण्वतां सद्यः सर्वसिद्धिप्रदायकम् ॥ २५॥

धर्मार्थकाममोक्षाणां साधनं ब्रह्मदं परम् ।
भविष्यति सदा मान्यं सर्वकार्येषु सर्वदा ॥ २६॥

मारणोच्चाटनादीनि स्तोत्रेणैव सुरर्षयः ।
भविष्यति न सन्देहः परकृत्यविनाशनम् ॥ २७॥

पुत्रपौत्रादिकं सर्वं लभते स्तोत्रपाठतः ।
धनधान्यकलत्रादि सुखं विन्दति मानवः ॥ २८॥

कारागृहगतं सद्यो मोचयेत् स्तोत्रपाठतः ।

हृदीप्सितं लभेत् सर्वमेकविंशतिवारतः ॥ २९॥

(Page खं. ५ अ. ९ पान १९)
एकविंशतिपाठांश्च स्तोत्रस्यास्य करिष्यति ।
स सद्यो हि फलं भुङ्क्ते एकविंशद्दिनावधि ॥ ३०॥

प्रसन्नोऽहं प्रदास्यामि स्तोत्रेण मुनयोऽमराः ।
वरं ब्रूत महाभागा यद्यपि स्यात् सुदुर्लभम् ॥ ३१॥

लम्बोदरवचो देवर्षयः श्रुत्वा प्रणम्य तम् ।
जगुः प्रहृष्टचित्तास्ते साश्रुनेत्राः सुयन्त्रिताः ॥ ३२॥

देवर्षय ऊचुः ।
लम्बोदर प्रसन्नोऽसि वरदोऽसि महाप्रभो ।
तव भक्तिं सुसम्पूर्णां देहि क्रोधविवर्जिताम् ॥ ३३॥

क्रोधासुरस्त्वया नाथ कृतः सुशान्तिधारकः ।
तेन विश्वं गणाधीश वरयुक्तं कृतं प्रभो ॥ ३४॥

स्वस्वकर्मरताः सर्वे भविष्यन्ति सुधर्मिणः ।
वयं च स्वाधिकारेषु स्थास्यामस्त्वत्प्रसादतः ॥ ३५॥

मुनयो भयहीनास्ते यथाऽऽचारकराः प्रभो ।
भविष्यन्ति गणाधीश कं वरं तु वृणीमहे ॥ ३६॥

एवमुक्त्वा प्रणेमुस्ते लम्बोदरं सुखप्रदम् ।
ननृतुस्तत्पुरः सर्वे हर्षनिर्भरमानसाः ॥ ३७॥

लम्बोदरस्तानुवाच तथेत्येव प्रतापवान् ।
अन्तर्धानं चकाराऽसौ पश्यताममरर्षिणाम् ॥ ३८॥

ततो देवा द्विजास्तत्र मूर्तिं कृत्वा सुशोभनाम् ।
चतुर्भुजां गणेशस्य स्थापयामासुरादरात् ॥ ३९॥

पश्चिमे सागरे तीरे पुपूजुस्तां विशेषतः ।
तदादि तत् समुद्भूतं क्षेत्रं लम्बोदरस्य च ॥ ४०॥

अंशेन स्वाधिकारेषु स्थिता देवर्षयोऽमलाः ।
पूर्णभावेन तत्रैव भक्तिं कुर्वन्ति नित्यदा ॥ ४१॥

एतल्लम्बोदरस्यैव कथितं सुचरित्रकम् ।

विश्वामित्रवसिष्ठौ च संश्रुतं क्रोधनाशनम् ॥ ४२॥

असद्ब्रह्ममयो लम्बोदरश्चायं गणेश्वरः ।
स्वतः परत उत्थानं करोति लीलया प्रभुः ॥ ४३॥

तस्य रूपं परं केन वक्तुं नैव प्रशक्यते ।
सर्वसंयोगयोगेन लभ्यते योगसेवया ॥ ४४॥

अयं लम्बोदरश्चैव पूर्णयोगप्रवाचकः ।
संयोगायोगयोर्योगे लभ्यते योगसेवया ॥ ४५॥

उदरात्तस्य सम्भूतौ संयोगायोगरूपकौ ।
तेन लम्बोदरश्चायं कथ्यते वेदवादिभिः ॥ ४६॥

असित उवाच ।
एवमुक्त्वा स्वयं ब्रह्मा विरराम महामते ।
वसिष्ठस्तं प्रणम्यैव गतः स्वाश्रममण्डले ॥ ४७॥

विश्वामित्रश्च मेधावी निःश्वस्य स्वस्थलं गतः ।
एवं गते मया तत्र पृष्टः सोऽपि पितामहः ॥ ४८॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पञ्चमे खण्डे गजाननचरिते लम्बोदरदेवर्षिकृतस्तुतिवर्णनं नाम नवमोऽध्यायः ॥ ५.९

(Page खं. ५ अ. १० पान २०)

## ५.१० वत्सराऽसितशान्तिवर्णनं नाम दशमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

नैध्रुव उवाच ।
श्रुत्वा कथां महाभाग क्रोधशान्तिकरीं प्रभो ।
न तृप्यामि पुनः स्वामिन् वद विघ्नेशचेष्टितम् ॥ १॥

त्वया पृष्टः कथं ब्रह्मा स जगाद किमप्यहो ।
तद्वदस्व दयासिन्धो तात योगप्रदं हि चेत् ॥ २॥

मुद्गल उवाच ।
एवं पृष्टो महातेजा नैध्रुवेण पितृव्यकः ।

कथान्तरमुवाचेदं महायोगप्रदं महत् ॥ ३॥

असित उवाच ।
शृणु पुत्र प्रवक्ष्यामि योगशान्तिपदप्रदम् ।
गणेशानस्य माहात्म्यं ब्रह्मेशस्य विचक्षण ॥ ४॥

ब्रह्माणं च प्रणम्यादावपृच्छं विनयान्वितः ।
वद तात महायोगं शान्तिदं सर्वतारक ॥ ५॥

सहजे च महायोगिन् स्वाधीनत्वं प्रदृश्यते ।
स्वेच्छामयं कथं नाथ भवति ब्रह्म ते नमः ॥ ६॥

अतः शान्तिविहीनौ त्वां समागतौ न संशयः ।
शान्त्यर्थं वद किं सेव्यं करिष्यावस्त्वदाज्ञया ॥ ७॥

असित उवाच ।
वत्सरेण मया तात पृष्टः सर्वविदां वरः ।
उवाच प्रेमसंयुक्तो गाणपत्यः पितामहः ॥ ८॥

ब्रह्मोवाच ।
कर्मज्ञानं समं ब्रह्म सहजं तु चतुर्थकम् ।
तेषां संयोगभावे वै स्वानन्दो मौनधारकः ॥ ९॥

तत्र स्वाधीनगं ब्रह्म पराधीनं कुतस्त्रिधा ।
स्वसंवेद्यमयेनैव सुतो योगेन लभ्यते ॥ १०॥

संयोगो मायया युक्तः सर्वसंयोगभावतः ।
अयोगे सर्वसंयोगो नश्यति व्यतिरेकतः ॥ ११॥

निवृत्त्या स्वधिया ब्रह्म प्राप्यते नान्यथा क्वचित् ।
स्वकीयाऽभेदतस्तत्र निवृत्तिर्योगिभिर्धृता ॥ १२॥

संयोगायोगयोर्योगे योगः शान्तिप्रदायकः ।
शान्त्या स एव लभ्यश्च सुतौ भवति नान्यथा ॥ १३॥

शान्तिरूपधरं पूर्णं गणेशं संवदन्ति च ।
वेदास्तं भावसंयुक्तो मुनी यदि भजिष्यथः ॥ १४॥

तदा शान्तियुतौ योगी भवन्तौ योगिसम्मतौ ।
भविष्यथो महाभागौ नान्यथा मे वचोऽनृतम् ॥ १५॥

सम्प्रज्ञातमयो देहोऽसम्प्रज्ञातमयं शिरः ।
गजाकारं तयोर्योगे गणेशो देहधारकः ॥ १६॥

गणाः समूहरूपाश्च समूहा ब्रह्मवाचकाः ।
तेषां स्वामी न सन्देहो गणेशो नामधारकः ॥ १७॥

चित्तरूपा महाबुद्धिश्चित्तमोहकरी मता ।
सिद्धिस्तयोः पतिः साक्षाद्गणेशो वेदवादतः ॥ १८॥

चित्तं मोहयुतं त्यक्त्वा चिन्तामणिं भजिष्यथः ।
योगशान्त्या महाभागौ नित्यं तं योगरूपकम् ॥ १९॥

असित उवाच ।
एवमुक्त्वा विधाता वां विरराम महामते ।
वत्सरेण समायुक्तस्तं प्रणम्य वनेऽगमम् ॥ २०॥

आवाभ्यां साधितं पुत्र यथोद्दिष्टं च वेधसा ।
शमदमयुताभ्यां वै शान्तिः प्राप्ता सुनिश्चला ॥ २१॥

तथापि गणराजस्य भजने निरतौ पुरा ।
गते वर्षे गणाध्यक्ष आययौ वरदायकः ॥ २२॥

तं दृष्ट्वा प्रणतौ देवं पुनः पूज्य यथाविधि ।
गणेशानं तुष्टुविव भक्त्या नम्रात्मकन्धरौ ॥ २३॥

असितवत्सरावूचतुः ।
लम्बोदर नमस्तुभ्यं सततं योगरूपिणे ।
योगाकारशरीराय योगशान्तिप्रदायिने ॥ २४॥

विघ्नेशाय महाभक्तानां विघ्नहरणाय च ।
अभक्तानां महाविघ्नकारिणे ते नमो नमः ॥ २५॥

(Page खं. ५ अ. १० पान २१)
स्वानन्दवासिने तुभ्यं सदा स्वानन्ददायिने ।
मूषकवाहनायैव मूषकध्वज वै नमः ॥ २६॥

अनाथाय गणेशाय सर्वेषां नाथरूपिणे ।
नाथानां नाथरूपाय विनायक नमोऽस्तु ते ॥ २७॥

हेरम्बाय च सर्वेषां मात्रे पित्रे नमो नमः ।

ज्येष्ठराजाय ज्येष्ठाय ज्येष्ठानां ज्येष्ठ ते नमः ॥ २८॥

अमेयायाऽप्रेमयायाऽनन्तखेलकराय ते ।
अनन्तानन्तरूपायानन्तदाय नमो नमः ॥ २९॥

सिद्धिबुद्धिपते नाथ भक्तसंरक्षकाय च ।
नानाशक्तिप्रपालायानन्तमायाविहारिणे ॥ ३०॥

गजवक्राय सर्वेषामादिपूज्याय ते नमः ।
सर्वपूज्याय सर्वेषां सिद्धिदाय नमो नमः ॥ ३१॥

वक्रतुण्डाय वीराय चैकदन्ताय ते नमः ।
महोदराय देवाय देवदेवेश ते नमः ॥ ३२॥

असुराणां सहायाय नानावरप्रदाय च ।
असुराणां निहन्त्रे त आसुराय नमो नमः ॥ ३३॥

ब्रह्मणां पतये तुभ्यं ब्रह्मणां ब्रह्मवादिने ।
ब्रह्माकाराय वै ढुण्ढे वेदवेद्याय ते नमः ॥ ३४॥

मनोवाणी विहीनाय मनोवाणीमयाय च ।
योगेशाय परेशाय सर्वामयविवर्जित ॥ ३५॥

किं स्तुवस्त्वां गणाधीश यत्र शान्तिं समागताः ।
वेदा योगीन्द्रमुख्याश्चास्तुवन्तं प्रणमावहे ॥ ३६॥

एवं स्तुतो गणाधीशस्तौ जगाद महामुनी ।
वरं संवृणुतं विप्रौ दास्यामि भक्तियन्त्रितः ॥ ३७॥

भवद्भ्यां यत् कृतं स्तोत्रं तदेव मे प्रियं भवेत् ।
सर्वसिद्धिप्रदं पूर्णं तथा मद्भक्तिदायकम् ॥ ३८॥

एवमुक्तौ महायोगिनावूचतुर्गजाननम् ।
भक्तिं देहि गणाध्यक्ष त्वत्पदे सुदृढां पराम् ॥ ३९॥

गाणपत्यप्रियत्वं नौ देहि नाथ नमोऽस्तु ते ।
नान्यं वरं गणाधीश वृणुवः सुखदं कदा ॥ ४०॥

तथेति तावुवाचाथ गणेशोंऽतर्दधे स्वयम् ।
आवां भक्तिसमायुक्तौ भजावो गणनायकम् ॥ ४१॥

इति ते कथितं वत्स ज्ञानं गणपतेर्मया ।
शमदमपरो भूत्वा भज तं गणनायकम् ॥ ४२॥

एवमुक्त्वाऽसितस्तं वै नैध्रुवं गणपस्य सः ।
मन्त्रं ददौ प्रजानाथ तस्मात् एकाक्षरं पुनः ॥ ४३॥

ततश्चान्तर्हितो योगी सोऽसितः परमार्थवित् ।
गणेशं नैध्रुवस्तेपे तपः सम्पूज्य यत्नतः ॥ ४४॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पञ्चमे खण्डे लम्बोदरचरिते वत्सराऽसितशान्तिवर्णनं नाम दशमोऽध्यायः ॥ ५.१०
(Page खं. ५ अ. ११ पान २२)

## ५.११ लम्बोदरब्रह्मवर्णनं नाम एकादशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
नैध्रुवो योगमार्गेण शमदमपरायणः ।
शान्तिं प्राप्तः क्रमेणैव योगिवन्द्यो बभूव ह ॥ १॥

ततः सोऽपि गणाधीशं न मुमोच तताप सः ।
तपः सेवापरो भूत्वा गाणपत्यप्रियार्थतः ॥ २॥

एवं तस्य तपो ज्ञात्वा तं ययौ स गजाननः ।
तं दृष्ट्वा सहसोत्थाय प्रणनाम कृताञ्जलिः ॥ ३॥

पुपूज भक्तिसंयुक्तः साश्रुनेत्रो महायशाः ।
सरोमाञ्चः प्रतुष्टाव सूक्तैर्गाणेशकैः प्रभुम् ॥ ४॥

ततस्तुष्टो गणाधीशस्तस्मै भक्तिं ददौ दृढाम् ।
गाणपत्यप्रियं कृत्वांऽतर्धानं स चकार वै ॥ ५॥

तदादि नैध्रुवो योगी गाणपत्यो बभूव ह ।
भजते गणनाथं सोऽधुना सर्वत्र सम्मतः ॥ ६॥

इति ते कथितं दक्ष चरित्रं सर्वदं परम् ।
लम्बोदरस्य माहात्म्यं सर्वशान्तिप्रदं प्रभो ॥ ७॥

क्रोधासुरचरित्रं तत्तथा ते कथितं मया ।

न संशयो भवेत्तस्मै श्रवणात् क्रोधशान्तिदम् ॥ ८॥

स्वस्वखण्डेषु सर्वत्र पश्चिमान्तदिगन्तरे ।
मुनिभिः स्थापितो लम्बोदरश्चैव गजाननः ॥ ९॥

तस्य दर्शनमात्रेण यथेप्सितफलं लभेत् ।
समुद्रतीरसंस्थस्य मूषकारूढकस्य वै ॥ १०॥

एवं लम्बोदरस्यांशा अनन्ता विविधाः स्मृताः ।
स्वस्वधर्मप्ररक्षार्थं जनेभ्यः सर्वदाः प्रभो ॥ ११॥

तेषां चरित्रकोट्यंशो वक्तुं नैव प्रशक्यते ।
ब्रह्मादिभिर्महाभाग तत्र कोऽहं नराकृतिः ॥ १२॥

जगद्ब्रह्मक्रियार्थं स याचितस्तैः पुरा प्रभो ।
शक्तिरूपावतारं च धृत्वा सर्वार्थदोऽभवत् ॥ १३॥

महिषासुरनाशार्थं याचितो मायया पुरा ।
विघ्नराजः स्वयं सोऽपि बभूवे धर्मपालकः ॥ १४॥

मायाकरविनाशाय शेषपुत्रो बभूव ह ।
लम्बोदरः स्वयं साक्षात् स वै मूषकगः स्मृतः ॥ १५॥

सावर्णिमनुना चैवाऽऽराधितो गणनायकः ।
बभूव वै तत्र लम्बोदरः शक्तिविनायकः ॥ १६॥

ब्रह्म नानाविधं वेदे कथितं तु प्रजापते ।
जगत्तेषां तथा भिन्नं विहारार्थं बभूव ह ॥ १७॥

तेषु स्वानन्दभावेन स्थितोऽयं ब्रह्मधारकः ।
संयोगाभेदयोगेन स वै लम्बोदरः स्मृतः ॥ १८॥

संयोगाभेदयोगेन समाधिना प्रजापते ।
नानाविधं जगद्ब्रह्म भवन्नश्यति तद्गतम् ॥ १९॥

तेषां भेदा गणेशेन तथा सृष्टाश्च पालिताः ।
हृतास्तेन समाख्यातो वेदे स ब्रह्मवाचकः ॥ २०॥

भेदा असत्यरूपाश्च तेषां ब्रह्म प्रकथ्यते ।
शक्तिर्जानीहि तां लम्बोदरमेव गजाननम् ॥ २१॥

(Page खं. ५ अ. २१ पान ४५)

## ५.२१ मूषकगावतारचरितं नाम एकविंशतितमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
मायाकरासुरं वीक्ष्य तुतोष गणनायकः ।
मूषकं स समारुह्य ययौ सङ्ग्राममण्डलम् ॥ १॥

चतुरायुधसंयुक्तं दृष्ट्वा विघ्नेश्वरं खलः ।
दैत्यानाज्ञापयामास देवानां हननाय सः ॥ २॥

ततो दैत्यगणाः सर्वे क्रोधयुक्ता महाबलाः ।
ववृषुः शस्त्रधाराभिर्मेघा इव सुदुर्मदाः ॥ ३॥

दृष्ट्वा देवगणाः क्रुद्धा युयुधुस्तान् समागतान् ।
एवं युद्धं महाघोरं सैन्ययोरुभयोरभूत् ॥ ४॥

परस्परं मम्रुरेत्य सम्मुखं ते जयेप्सवः ।
रक्तौघैः सरितस्तत्र सञ्जाता भयदायिकाः ॥ ५॥

कदाचिज्जयिनो दैत्याः कदाचिदमरा मृधे ।
न रात्रौ विश्रमं ते तु चक्रिरे क्रोधसंयुताः ॥ ६॥

एवं दिनानि सप्तैव युयुधुः शस्त्रकोविदाः ।
पलायन्तामरा भिन्ना हाहारवकरा भृशम् ॥ ७॥

तद् दृष्ट्वा शङ्करः क्रुद्ध आययौ रणमण्डले ।
ततो विष्णुमुखा देवा युयुधुः क्रोधसंयुताः ॥ ८॥

तेषां शस्त्रप्रहारेण मृता दैत्या अनेकशः ।
प्रजापते पलायन्त भयभीता दिशो दश ॥ ९॥

मूर्च्छिता दैत्यराजास्ते सर्वे भूतलमाश्रिताः ।
दृष्ट्वा सिंहरवं मायाकरः कृत्वा समागतः ॥ १०॥

क्रोधयुक्तो महादैत्यः शस्त्रवृष्टिं चकार ह ।
तया देवाः क्षता भूमौ पेतुः सर्वे प्रजापते ॥ ११॥

अग्न्यस्त्रेण महादैत्यः पातयामास शङ्करम् ।

अन्ये दाहयुताः सर्वे पलायन्त दिशो दश ॥ १२॥

एवं मूषकगस्तस्य बलं दृष्ट्वा तुतोष ह ।
स्वयं समागतो हर्षाद्रणभूमौ महाबलः ॥ १३॥

दृष्ट्वा मूषकसंस्थं तमवोचद् दैत्यनायकः ।
क्रोधयुक्तः प्रहस्याऽऽदौ वचनं मद्यपो यथा ॥ १४॥

मायाकरासुर उवाच ।
किं सङ्ग्रामाय विघ्नेश मया सह समागतः ।
एकबाणेन हत्वा त्वां हनिष्यामि सुरान् मुनीन् ॥ १५॥

चतुःपदार्थरूपं वै जगत् सर्वं प्रवर्तते ।
तस्मान्मे मरणं नास्ति किं करिष्यसि देवप ॥ १६॥

ब्रह्माण्डं निर्जितं येन तेन सार्धं गजानन ।
योद्धुमिच्छसि बालः सन् बालभावान्न संशयः ॥ १७॥

नत्वा मां स्वगृहं याहि न हनिष्यामि निश्चितम् ।
त्वामज्ञानसमायुक्तं प्रेरकांस्तान्निहन्म्यहम् ॥ १८॥

नाम मूषकगस्तेचाखुतुल्यस्त्वं मतो मम ।
मूर्खवन्नैव जानासि मां सर्वभयदायकम् ॥ १९॥

एवं मायाकरं वीक्ष्य ब्रुवन्तं स्वपराक्रमम् ।
मूषकगस्तमेवं वै जगाद वचनं हितम् ॥ २०॥

मूषकग उवाच ।
किं मां वदसि दैत्येन्द्र नाऽहं बालोऽसुराधम ।
स्वानन्दवासकारी वै त्वां हन्तुं रूपवान् परः ॥ २१॥

हनिष्यामि न सन्देहश्चतुर्भिर्वर्जितोऽधुना ।
बालस्य पश्य मे मूर्ख पौरुषं दैत्यनायक ॥ २२॥

इत्युक्त्वा क्रोधसंयुक्तः कमलं निजहस्तगम् ।
बिन्दुब्रह्ममयं ज्योतिस्तत्याज मूषकेशगः ॥ २३॥

आगतं कमलं दृष्ट्वा ज्योतीरूपमयं महत् ।
मायाकरासुरस्तद्वै जग्राह बलगर्वितः ॥ २४॥

गृहीतं दैत्यराजेन हस्तगं न च हस्तगम् ।

पपात कण्ठदेशेऽस्य ममार दैत्यनायकः ॥ २५॥

कमलं गणराजस्य हस्तगं पुनरञ्जसा ।
(Page खं. ५ अ. २१ पान ४६)
बभूव चासुरेशाना विस्मिताः सम्बभूविरे ॥ २६॥

अहो मायाकरो राजा कथं ममार गर्वितः ।
शरीरं यादृशं तस्य तादृशं दृश्यतेऽधुना ॥ २७॥

तेजः समागतं ह्यत्र तेन तेजो हृतं मृधे ।
शस्त्रघातविहीनोऽयं ममार दैत्यनायकः ॥ २८॥

ततो दैत्यगणाः सर्वे भयभीताः समन्ततः ।
पातालं विविशुर्दक्ष देवा हर्षयुता बभुः ॥ २९॥

मूषकगं नमस्कृत्य मुनिभिस्तत्त्वकोविदैः ।
सर्वे पुपूजुर्देवेशास्तुष्टुवुः करसम्पुटैः ॥ ३०॥

देवर्षय ऊचुः ।
सर्वेषां भोगभोक्त्रे मूषकगाय नमो नमः ।
सर्वदेवाधिदेवाय गणेशाय नमो नमः ॥ ३१॥

लम्बोदराय विघ्नानां नायकाय परात्मने ।
भक्तानां विघ्नहर्त्रे ते विघ्नदात्रे दुरात्मनाम् ॥ ३२॥

हेरम्बाय नमस्तुभ्यं भक्तवत्सलरूपिणे ।
स्वानन्दवासिने चैव परेशाय नमो नमः ॥ ३३॥

महोदराय पूज्याय सर्वेषां सर्वरूपिणे ।
सर्वादिपूज्यकायैव वक्रतुण्डाय ते नमः ॥ ३४॥

त्रिनेत्राय चतुर्हस्तकमलस्य धराय ते ।
मूषकोपरिसंस्थाय ज्येष्ठराजाय ते नमः ॥ ३५॥

अमेयाय गणाध्यक्ष शूर्पकर्णप्रधारिणे ।
सर्वेशाय नमस्तुभ्यं ब्रह्मणे ब्रह्मरूपिणे ॥ ३६॥

अनादये तथा मध्ये नानारूपधराय ते ।
अन्ते तादृशरूपाय त्रिस्वरूपाय वै नमः ॥ ३७॥

शेषपुत्राय शैवाय पाराशर्याय ते नमः ।

सर्वेषां जनकायैव मात्रे ब्रह्मेश ते नमः ॥ ३८॥

स्रष्ट्रे पात्रे च संहर्त्रे गणेशाय नमो नमः ।
शान्तिरूपाय शान्तिभ्यः शान्तिदाय नमो नमः ॥ ३९॥

अपारगुणधाराय योगिनां हृदि संस्थित ।
तत् किं स्तुमो नः प्रसीद गणाधीश नमो नमः ॥ ४०॥

एवं स्तुत्वा गणेशानं प्रणेमुस्ते सुरर्षयः ।
प्रसन्नात्मा मूषकगस्तानुवाच प्रहर्षितः ॥ ४१॥

मूषकग उवाच ।
कृतं मे स्तवनं सर्वैर्भवद्भिः सर्वदं भवेत् ।
यद्यदिच्छथ तत्तद्दास्यामि वै भक्तितन्त्रितः ॥ ४२॥

पठतां शृण्वतां नित्यं स्वाधीनोऽहं भवामि च ।
भुक्तिमुक्तिप्रदं पूर्णं पुत्रपौत्रादिवर्धनम् ॥ ४३॥

वरं वृणुत देवेशा देवा मुनिसमन्विताः ।
दास्यामि स्तोत्रतुष्टोऽहं वाञ्छितं नात्र संशयः ॥ ४४॥

देवर्षय ऊचुः ।
मायाकरासुरस्यैव त्वया नाशः कृतो महान् ।
तेन तुष्टा गणाधीश किं वदामो वरं परम् ॥ ४५॥

भक्तिं देहि दृढां नाथ त्वदीयां शान्तिदायिनीम् ।
तया वयं गणेशान कृतकृत्या न संशयः ॥ ४६॥

तथेति तानुवाचाथ गणेशोंऽतर्दधे स्वयम् ।
देवाः खिन्ना ययुः सर्वे स्वस्वस्थानं निरामयाः ॥ ४७॥

मुनयः स्वाश्रमं जग्मुर्महाहर्षसमन्विताः ।
पूर्ववत् कर्मकर्तारो बभूवुः सर्वजन्तवः ॥ ४८॥

शेषः सम्मूर्च्छितस्तत्र पपात धरणीतले ।
हृदि तस्य गणेशानः प्रकटोऽभूच्च तत्क्षणात् ॥ ४९॥

जगाद तं महानागं मन्मूर्तिस्थापनं कुरु ।
तत्र पूजापरो भूत्वा कालं क्राम च सर्पप ॥ ५०॥

पातालविवरे क्षेत्रं भविष्यति सुसिद्धिदम् ।

तत्र मां पूजयिष्यन्ति तेभ्यः सर्वं ददाम्यहम् ॥ ५१॥

(Page खं. ५ अ. २२ पान ४७)
एवमुक्त्वांऽतर्दधेऽसौ गणेशो ब्रह्मनायकः ।
शेषः स्वगृहमागत्य तथा चक्रे स भावतः ॥ ५२॥

शतयोजनपर्यन्तं क्षेत्रं गणपतेः स्मृतम् ।
पाताले सिद्धिदं सर्वं स्वानन्दं कथ्यतेऽपरम् ॥ ५३॥

तत्र पूजनमात्रेण वाञ्छितं लभते नरः ।
अनुष्ठानविधानेन ब्रह्मभूयं लभेत्तथा ॥ ५४॥

इदं ते कथितं दक्ष मूषकगस्य चेष्टितम् ।
भुक्तिमुक्तिप्रदं पूर्णं श्रवणात् पठनान्नृणाम् ॥ ५५॥

जगत्सु ब्रह्मसु स्थित्वा चौरवद् गणनायकः ।
भुनक्ति भोगकान् सर्वांस्तेनाऽयं मूषकध्वजः ॥ ५६॥

भक्तानां स्मरणेनाऽयं पुण्यपापभवं मलम् ।
हृत्वा ब्रह्ममयांस्तांश्च कुरुते मूषकध्वजः ॥ ५७॥

ज्येष्ठशुक्लचतुर्थ्यां महोत्सवो वै प्रवर्तते ।
जनुस्तिथिर्गणेशस्याङ्गारकी मध्यगे रवौ ॥ ५८॥

स्तेयानां विविधानां स राजवाहोऽयमुच्यते ।
ततो मूषकगो लम्बोदरः प्रोक्तः प्रजापते ॥ ५९॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पञ्चमे खण्डे लम्बोदरचरिते मूषकगावतारचरितं नाम एकविंशतितमोऽध्यायः ॥ ५.२१

## ५.२२ शक्तिपुत्रचरितं नाम द्वाविंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
लम्बोदरावतारो मूषकगोऽयं प्रकीर्तितः ।
स एव शक्तिपुत्रोऽभूत्तच्छृणुष्व प्रजापते ॥ १॥

शक्तिलोकस्थिता देवी निर्ममे सकलं जगत् ।

तद्रक्षणविहारार्थं त्रिधाऽभूत् साऽपि मायया ॥ २॥

महाकाली तथा दक्ष महालक्ष्मीः प्रकीर्तिता ।
महासरस्वती प्रोक्ता भक्तानां भेदनाशनात् ॥ ३॥

ताभ्यो नानाविधा जाता देव्यो दुर्गादिकाः किल ।
देवीभिः सहिता साऽपि ततापत तप उत्तमम् ॥ ४॥

एकाक्षरविधानेन दिव्यवर्षसहस्रकम् ।
ततः प्रसन्नभावन विघ्नेशो वरदोऽभवत् ॥ ५॥

स्तुतः सम्पूजितस्ताभिर्वरं चित्तेप्सितं ददौ ।
बहुत्वान्नो कथयितुं भवेच्छक्यं प्रजापते ॥ ६॥

वरस्यैव प्रभावेण स्वस्वकार्यरता बभुः ।
देव्यो लम्बोदरं नित्यं भजन्ते कुलदैवतम् ॥ ७॥

आदिशक्तिर्महामाया शान्त्यर्थं पुनरारभत् ।
तपो दुष्करमत्यन्तं ततः शान्तिमवाप सा ॥ ८॥

तथापि तपसा युक्ता पुपूज गणनायकम् ।
ततो वर्षेषु पूर्णेषु शते हृदि समागतः ॥ ९॥

तं दृष्ट्वा हृदि संस्थं सा तुष्टाव विविधैः स्तवैः ।
ततो बहिर्विनिःसृत्य जगाद जगदम्बिकाम् ॥ १०॥

पुत्रोऽहं ते महाभागे ध्यानजो नाऽत्र संशयः ।
पश्य मां त्वं महामाये स्थितं लम्बोदरं बहिः ॥ ११॥

सा प्रबुद्धा बहिर्लम्बोदरं वीक्ष्य तुतोष ह ।
(Page खं. ५ अ. २३ पान ४८)
अथर्वशिरसा देवी तुष्टवापूज्य साश्रुका ॥ १२॥

तुष्टस्तां गणराजश्च जगाद वृणु वाञ्छितम् ।
दास्यामि भक्तियुक्तायै पुत्रोऽहं पालयस्व माम् ॥ १३॥

शक्तिरुवाच ।
अनेन वपुषा नाथ स्थिरो भव गजानन ।
भक्तिं देहि दृढां वत्स तव पादाम्बुजे पराम् ॥ १४॥

योगिनां ध्यानजं ब्रह्म पुत्रो वेदे प्रकीर्तितः ।

तत्र किं चित्रमेवेदं विनायक कृतं त्वया ॥ १५॥

श्रुत्वा तां गणराजस्तु जगाद वचनं हितम् ।
मन्मूर्तिस्थापनं कृत्वा पूजयस्व निरन्तरम् ॥ १६॥

पुत्रवत्सलतां तत्र कुलदेवत्वमादरात् ।
ब्रह्मभावं तथा देवि कुरु त्वं सर्वदा मयि ॥ १७॥

तत्र पूजोपचाराद्यैः पूजयस्व निरन्तरम् ।
तया त्वं कृतकृत्या च भक्तियुक्ता भविष्यसि ॥ १८॥

एवमुक्त्वांऽतर्दधेऽसौ लम्बोदरः प्रजापते ।
शक्तिस्तथैव कृत्वा तं भजते ब्रह्मनायकम् ॥ १९॥

एवं नानाऽवताराश्च लम्बोदरस्य मानद ।
भक्तानां सर्वसिद्ध्यर्थं भजतां परमाद्भुताः ॥ २०॥

रक्तदन्तादिभिश्चैव देवीभिस्तपसा प्रभुः ।
आराधितो वधार्थाय दैत्यानां गणनायकः ॥ २१॥

देवीभिः संस्तुतो देवः प्रसन्नो वरदोऽभवत् ।
वरस्यैव प्रभावेण हता दैत्या अनेकशः ॥ २२॥

योगनिष्ठा महादेव्योऽभजंस्तं विघ्ननाशनम् ।
कुलदैवतभावेन शान्त्यर्थं च प्रजापते ॥ २३॥

ते सर्वे गणराजा वै स्मृता लम्बोदरात्मकाः ।
ज्ञातव्याः सर्वभावेन ब्रह्मभूतपदप्रदाः ॥ २४॥

इदं लम्बोदरस्यैवावतारस्य कथामृतम् ।
शृणोति पठते वापि स सर्वफलभाग् भवेत् ॥ २५॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पञ्चमे खण्डे लम्बोदरचरिते शक्तिपुत्रचरितं नाम द्वाविंशोऽध्यायः ॥ ५.२२

## ५.२३ गाणपत्यदीक्षावर्णनं नाम त्रयोविंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
अथो शृणु महाभाग गाणपत्यस्वरूपकम् ।

येन त्वं गाणपत्ये वै पदे सुनिपुणो भवेः ॥ १॥

नरो गणेशभक्तिं यो भवेत् कर्तुं समुद्यतः ।
गणेशप्रीतिकामार्थं दीक्षायुक्तो भवेदयम् ॥ २॥

गाणपत्यं सुशान्तिस्थं गुरुं वेदार्थपारगम् ।
नत्वा तं संवदेत् पूर्वं दीक्षां देहि महाप्रभो ॥ ३॥

त्वमेव गणराजोऽसि गाणपत्यपरायणः ।
मां कुरुष्व महाभाग गाणपत्यं सुशीलकम् ॥ ४॥

एवं पृष्टो गुरुः शिष्यं वदेद् दृष्ट्वा सुशीलगम् ।
श्रौतस्मार्तक्रियायुक्तं गणेशभावलालसम् ॥ ५॥

ततस्तं शिक्षयेदादौ धर्मान् गाणेशकान् परान् ।
तांस्तुभ्यं कथयाम्येव शृणु सर्वसुखप्रदान् ॥ ६॥

(Page खं. ५ अ. २३ पान ४९)
परान्नं भक्षयेन्नैवालोकयेन्न रजस्वलाम् ।
परस्त्रीगमनं क्वापि न कुर्यान् मनसाऽपि सः ॥ ७॥

स्वार्थाय क्रोधसंयुक्तो न भवेल्लोभसंयुतः ।
अभक्ष्यभक्षणं नैव कुर्यात् हिंसां कदापि न ॥ ८॥

गुरुद्रोहं च पैशून्यं ज्येष्ठानामपमानकम् ।
वेदशास्त्रादिमार्गेभ्यो हीनं नैव समाचरेत् ॥ ९॥

इहामुत्र विरक्तः स भवेद्ब्रह्मपरायणः ।
इत्यादिविविधान् धर्मानुपदिश्य मनुं दिशेत् ॥ १०॥

आदौ कृच्छ्रादिकं तस्मै दापयेच्च ततः परम् ।
गाणपत्यान् समाज्ञाप्य सुदिनं त्ववलोकयेत् ॥ ११॥

अथवा गणराजस्योत्सवदां तिथिमादरात् ।
चतुर्थीं शुक्लपक्षस्थां वा कृष्णामवलोकयेत् ॥ १२॥

गणेशप्रियकालं वा समालोक्य सुसिद्धिदः ।
गुरुः शिष्याय मन्त्रं वै दद्याद्भक्त्यर्थमादरात् ॥ १३॥

शृणु तत्र विधिं दक्ष कथयामि सुखप्रदम् ।
शुचौ मण्डपिकां कृत्वा गोमयेनाऽवलेपयेत् ॥ १४॥

मृन्मयां तु स्वयं तत्र वेदिं कुर्याद्विचक्षणः ।
चतुरस्रां च तन्मध्ये दिक्षु संस्थापयेद् घटान् ॥ १५॥

आदौ गणेशयन्त्रं स्वं कुङ्कुमेनात्र कारयेत् ।
स्वेष्टमष्टगणेशानान् पूजयेद् विधिपूर्वकम् ॥ १६॥

दीक्षायुक्तांश्च गाणेशान् पूजयेत् स ततः परम् ।
तेभ्यो भूषणवस्त्रादीन् दापयेच्छाठ्यवर्जितः ॥ १७॥

गाणेशेनैव मन्त्रेण स जपं कारयेत्तु तैः ।
पुरश्चरणसङ्ख्याकमथवा लक्षमादरात् ॥ १८॥

अथवा दशसाहस्रमथवा च सहस्रकम् ।
तद्दशांशेन होमं वै कुर्यात्तत्र महामतिः ॥ १९॥

ततो बलिप्रदानं वै कुर्यात् पूर्णाहुतिं ततः ।
पुनः सम्पूज्य विघ्नेशं स प्रणम्य ततो गुरुम् ॥ २०॥

प्रार्थयेत् सर्वभावेन शिष्यं मां तारय प्रभो ।
मन्त्रं देहि महाभाग गाणपत्यं विशेषतः ॥ २१॥

पुनर्गुरुं समभ्यर्च्य ततः सकलशं पुनः ।
स्थापयेत् स्वेष्टदेवाढ्यं गाणेशेनैव मन्त्रतः ॥ २२॥

तत्र विघ्नेश्वरं ध्यात्वा पूजयेत् स्वल्पमार्गतः ।
ततो वस्त्रं समाच्छाद्य मस्तके गुरुसंयुतः ॥ २३॥

प्रणम्य स्वगुरुं तत्र प्रार्थयेद्वद मन्त्रकम् ।
संसारतारणार्थाय देहि मन्त्रं द्विजोत्तम ॥ २४॥

एवं गुरुर्महर्षिश्च प्रार्थितस्तं सुशिक्ष्य वै ।
गणेशं मनसा ध्यात्वा मन्त्रं शिष्याय दापयेत् ॥ २५॥

ततस्तान् कलशान् गृह्य पूर्वदिक्क्रमतश्च तैः ।
अष्टोत्तरशतं मन्त्रं जपंस्तं स्नापयेद्गुरुः ॥ २६॥

एकैकसिद्धिदः प्रोक्तः कलशः स्नानमात्रतः ।
ब्रह्मभूयकरः प्रोक्तो मध्यमः सर्वसिद्धिदः ॥ २७॥

स्नातं शिष्यं समादाय गणेशं प्रणिपत्य च ।

शिष्येण पूजयेद्देवं ततस्तं स विसर्जयेत् ॥ २८॥

प्रणमेद् गाणपत्यांस्तांस्ततो दद्याच्च दक्षिणाम् ।
पुष्कलां शाठ्यहीनः स भोजयेत्तान् महायशाः ॥ २९॥

मोदकापूपलड्डूकपायसान्नैर्महामते ।
सूक्ष्मतन्दुलसंयुक्तैर्नानापक्वान्नमिश्रितैः ॥ ३०॥

यथेष्टं भोजयित्वा वै प्रणमेत् स पुनः पुनः ।
प्रार्थयेत्तान् विशेषेण तारितोऽहं भवार्णवात् ॥ ३१॥

सम्भारं गुरवे दद्याद्गुरुवंशं नमेत् सदा ।
(Page खं. ५ अ. २४ पान ५०)
गाणपत्यान् प्रदृश्यैवोत्थाय तांश्च नमेन्नरः ॥ ३२॥

गाणपत्यान् समालोक्य न नमेद्यः प्रजापते ।
तेन विघ्नेश्वरः साक्षाद्धिंसितो नाऽत्र संशयः ॥ ३३॥

एवं दीक्षां समागृह्य गणेशं पूजयेत् सदा ।
तत्समीपे तु मन्त्रस्य पुरश्चरणकं चरेत् ॥ ३४॥

अथ धर्मान् प्रवक्ष्यामि शृणु तान् सुसमाहितः ।
दन्तकाष्ठमभुक्त्वा तु न गच्छेद्गणपालयम् ॥ ३५॥

मैथुनं यदि कृत्वा देवालयं च गमिष्यति ।
स सद्यो भ्रंशमागच्छेदतः स्नात्वा च तं व्रजेत् ॥ ३६॥

अशुद्धवस्त्रसंयुक्तो विघ्नराजं न संस्पृशेत् ।
परवस्त्रधरो भूत्वा पूजयेन्न गणाधिपम् ॥ ३७॥

छिद्रयुक्तं न वस्त्रं स धारयेद्देवपूजने ।
मौनेन पूजयेद्देवं यथाविधि गणेश्वरम् ॥ ३८॥

गणेशपूजने सक्तो यदि वाचं वदेन्नरः ।
पूजान्तरायदोषेण विघ्नयुक्तो भवेन्नरः ॥ ३९॥

अभ्यङ्गसंयुतो यस्तु स्नानहीनो यदा भवेत् ।
देवालयं समागच्छेत्तदा भ्रंशमवाप्नुयात् ॥ ४०॥

उपानत्स्पर्शसंयुक्तः पादक्षालनवर्जितः ।
गणेशानालयं गच्छेद्विघ्नयुक्तो भवेन्नरः ॥ ४१॥

गन्धादिचर्चितो भूत्वा यो नार्च्य गणनायकम् ।
देवालयं गतो दैवाल्लभेद् भ्रंशं स मानवः ॥ ४२॥

अजीर्णदोषसंयुक्तो यस्तिष्ठेद्देवसन्निधौ ।
उद्गाराधः समीरेण विघ्नयुक्तो भवेत्तु सः ॥ ४३॥

भेरीशब्दमनावाद्य गणेशालयगो भवेत् ।
स भ्रंशं च लभेद्दक्ष देवगुह्यप्रभञ्जनात् ॥ ४४॥

देवालयं समागत्याऽनृतवाचं वदेन्नरः ।
अथवा देवस्तुत्यादिहीनां स भ्रंशितामियात् ॥ ४५॥

नित्यं तत्र प्रजानाथ संयतो देवसन्निधौ ।
मर्यादां पालयंस्तिष्ठेत् स ईप्सितफलं लभेत् ॥ ४६॥

यथाशास्त्रं विचारेण गणेशं सर्वसिद्धिदम् ।
यो भजेत् गाणपत्यस्तं स गणेशो भवेन्नरः ॥ ४७॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
पञ्चमे खण्डे लम्बोदरचरिते गाणपत्यदीक्षावर्णनं नाम त्रयोविंशोऽध्यायः ॥ ५.२३

## ५.२४ गाणपत्यस्वरूपवर्णनं नाम चतुर्विंशतितमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
यदि क्षत्रियवंशस्थो दीक्षामिच्छति शाश्वतीम् ।
गाणेशीं शृणु वक्ष्यामि विधिं तस्य प्रजापते ॥ १॥

ब्राह्मणस्यैव हस्तेन कारयेदेतदादरात् ।
मन्त्रमात्रं जपेत् सोऽपि न होमादि स्वहस्ततः ॥ २॥

शस्त्रविद्यां परित्यज्य दण्डादिकमशेषतः ।
गाणपत्यो भवेत् सोऽपि क्षत्रियो नात्र संशयः ॥ ३॥

वैश्यः स्ववृत्तिजं कर्म क्रयविक्रयकं परम् ।
त्यजेत्ततो गणेशस्य दीक्षायां योग्यतामियात् ॥ ४॥

शूद्राणां नाममन्त्रश्च वक्तव्यो ब्राह्मणैः सदा ।

हिंसादिकमथो त्यक्त्वा शूद्रो दीक्षां लभेत् पराम् ॥ ५॥

(Page खं. ५ अ. २४ पान ५१)
नाममन्त्रेण सर्वं वै कुर्यात् शूद्रः स्वयं विधिम् ।
गणेश्वरस्य पूजादि न श्लोकादि समुच्चरेत् ॥ ६॥

न होमादिभवं कर्म प्रायश्चित्तं चरेत्तथा ।
गाणपत्यो भवेच्छूद्रो दीक्षायुक्तो महायशाः ॥ ७॥

गणेशदीक्षया युक्तो भवेद् विपथगो यदि ।
स एव विघ्नसंयुक्तो भविष्यति प्रकोपतः ॥ ८॥

अथ दीक्षितजन्तूनां चिह्नानि ते वदाम्यहम् ।
तैर्युक्तान् गाणपत्यान् वै परान् जानाति मानवः ॥ ९॥

प्रातः स्नानादिकं कृत्वा सन्ध्यां शाखोक्तमार्गतः ।
आगमोक्तां च वेदोक्तां पूजां कृत्वा समापयेत् ॥ १०॥

अर्चनं द्वादशाङ्गेषु यः कुर्यान् मन्त्रपूर्वकम् ।
सर्वाङ्गलेपनेनैव तत्र मन्त्रान् शृणु प्रभो ॥ ११॥

गणेशोच्छिष्टगन्धं वै गृह्यादौ नियतो न्यसेत् ।
स्वानन्दवासिने जप्त्वा नमो मूर्धानमर्चयेत् ॥ १२॥

ललाटं गणनाथाय नम उच्चार्य चार्चयेत् ।
दक्षिणं कर्णमूलं च गजकर्णाय वै नमः ॥ १३॥

वामकर्णं तथा दक्ष शूर्पकर्णाय ते नमः ।
अर्चयेच्च ततः कण्ठं विघ्नेशाय ततः पठन् ॥ १४॥

बाहुं दक्षिणगं तद्वद् हेरम्बाय नमोऽर्चयेत् ।
वामं समर्चयेत् सुज्ञः सिद्धिनाथाय वै नमः ॥ १५॥

हृदयं चार्चयेत्तत्र बुद्धीशाय नमो विधे ।
उदरं नाभिसंस्थानं नमो लम्बोदराय ते ॥ १६॥

दक्षिणं चैव कुक्षिं स वक्रतुण्डाय वै नमः ।
वामं तु चिन्तामणये ह्यर्चयेन्नात्र संशयः ॥ १७॥

पृष्ठदेशं नाभिसममर्चयेत् ढुण्ढये नमः ।
एते द्वादश मन्त्राश्च कथितास्ते प्रजापते ॥ १८॥

ललाटं चार्चयेत् सुज्ञः सर्वभद्रविधानतः ।
अङ्गानि स तथा दक्ष नाभेरूर्ध्वं समर्चयेत् ॥ १९॥

सर्वाङ्गलेपनं शस्तं गाणेशानां विशेषतः ।
रक्तचन्दनसंयुक्तो गन्धस्तेषां मतः सदा ॥ २०॥

मालां शमीभवां वाऽपि प्रभो मन्दारवृक्षजाम् ।
प्रशस्तां स्वगले बाहौ सर्वसिद्धिप्रदायिनीम् ॥ २१॥

धारयेन्नात्र सन्देहो देवकाष्ठप्रमाणतः ।
अन्यकाष्ठभवां मालां धारयेन्न कदाचन ॥ २२॥

वैष्णवानां यथा दक्ष तुलसीकाष्ठसम्भवा ।
तथा वै गाणपत्यानां शमीमन्दारसम्भवा ॥ २३॥

तदभावे प्रजानाथ विद्रुमजां तु धारयेत् ।
अथवाऽक्षमयीं मालां धारयेन् मन्दमार्गतः ॥ २४॥

सदा शुचिस्वभावस्थो मित्रशत्रुत्ववर्जितः ।
द्वन्द्वभावविनिर्मुक्तो गाणपत्यश्चरेन् महीम् ॥ २५॥

शुक्लकृष्णचतुर्थीजं व्रतं नित्यं समाचरेत् ।
गाणपत्यानि सर्वाणि व्रतानि श्रद्धयान्वितः ॥ २६॥

अन्यदेवप्रियं दक्ष व्रतं तीर्थं चरेत्तथा ।
शक्तियुक्तो भवेत् सोऽपि तदा सर्वं प्रतिष्ठितम् ॥ २७॥

क्षेत्राणि गाणपत्यानि चरेन्नियमसंयुतः ।
अन्यानि शक्तियुक्तश्चेत् निश्चितं मुनिभिः पुरा ॥ २८॥

यथा गणेश्वरो देवः सर्वेषामादिपूज्यकः ।
अन्यदेवस्य भक्तानां तथा तस्य व्रतादिकम् ॥ २९॥

गाणेशानां यथा दक्ष एक एव गणेश्वरः ।
आवश्यकेन तद्व्रतादिकं च समाचरेत् ॥ ३०॥

सदा गणेशनाम्नश्च कीर्तनं तत्र वर्तते ।
(Page खं. ५ अ. २४ पान ५२)
कथा नानाविधा रम्याः कथयन्ति परस्परम् ॥ ३१॥

चरित्राणि गणेशस्य गायेयुर्हर्षसंयुताः ।
पात्रीभूतान् जनान् दृष्ट्वा बोधयन्ति सुसिद्धये ॥ ३२॥

अत्र ते कथयिष्यामि संवादं नारदेन्द्रजम् ।
एकदा नारदो योगी भ्रमन्निन्द्रं समाययौ ॥ ३३॥

इन्द्रेण पूजितः सोऽपि गाणेशं गानमाकरोत् ।
तं प्रणम्य महेन्द्रश्च जगाद वाक्यमुत्तमम् ॥ ३४॥

इन्द्र उवाच ।
वद ब्रह्मन् महाभाग चिह्नानि गणपात्मनाम् ।
कैश्चिह्नैः संयुता नित्यं गाणपत्याश्चरन्ति हि ॥ ३५॥

नारद उवाच ।
सर्वाङ्गे चन्दनालेपो रक्तचन्दनसंयुतः ।
शमीमन्दारमाला च तेषां हस्ते गले भवेत् ॥ ३६॥

सदा गणेशनाम्नश्च श्रवणे तत्पराः स्मृताः ।
कीर्तने भावसंयुक्ताः गाणपत्या इमे बुधाः ॥ ३७॥

द्वन्द्वस्य भावो हृदि नोभवेत् कदा ये निःस्पृहा योगधराः सुनिर्मलाः ।
गाणेश्वरा वन्दनशीलकाः सदा तान् गाणपत्यान् प्रवदन्ति योगिनः ॥ ३८॥

नित्यं स्वधर्मेण च संयुतास्तथा न मानयन्ति ह्यपवर्गकं कदा ।
भक्तौ निमग्ना गणराजवर्त्मनि तान् गाणपत्यान् प्रवदन्ति योगिनः ॥ ३९॥

न स्थानगेहादिकमाश्रयन्ति ये प्रारब्धमात्रेत्यवलम्बिनोऽपरे ।
चिन्तामणौ चित्तनिवेशकाः सदा तान् गाणपत्यान् प्रवदन्ति योगिनः ॥ ४०॥

श्रौते तथा स्मार्तभवे सुकर्मणि संसक्तदेहा गणराजसिद्धये ।
सर्वाणि कर्माणि समर्प्य नैज्यपे तान् गाणपत्यान् प्रवदन्ति योगिनः ॥ ४१॥

निन्दां स्तुतिं वीक्ष्य विकारवर्जिताः कान्तासुवर्णादिषु भावहीनकाः ।
प्राटन्ति विघ्नेश्वरभक्तिलालसा तान् गाणपत्यान् प्रवदन्ति योगिनः ॥ ४२॥

आच्छादिता ये न च केन भावितास्तिरस्कृता देववरिष्ठभोजिनः ।
जीवैर्हता दोषविहीनचेतसस्तान् गाणपत्यान् प्रवदन्ति योगिनः ॥ ४३॥

नेच्छन्ति कैलासविकुण्ठकादिकं न ब्रह्मभूयं न रसां रसातलम् ।
भक्तिं सदेच्छन्ति गणेशभाविकान् तान् गाणपत्यान् प्रवदन्ति योगिनः ॥ ४४॥

मुद्गल उवाच ।
एवमुक्त्वा महेन्द्रं स नारदः स्वेच्छया मुनिः ।
ययौ विघ्नेश्वरं गायन् यत्र तत्र प्रजापते ॥ ४५॥

एतत्ते गाणपत्यानां स्वरूपं कथितं मया ।
श्रवणात् पापसम्भूतमज्ञानं नाशमाव्रजेत् ॥ ४६ ॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पञ्चमे खण्डे लम्बोदरचरिते गाणपत्यस्वरूपवर्णनं नाम चतुर्विंशतितमोऽध्यायः ॥ ५.२४

(Page खं. ५ अ. २५ पान ५३)

## ५.२५ शमीमन्दारवरप्रदानं नाम पञ्चविंशतितमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

दक्ष उवाच ।
शमीमन्दारमाहात्म्यं वद मे करुणानिधे ।
कथं विघ्नेश्वरस्यैव प्रियौ तौ सम्बभूवतुः ॥ १॥

मुद्गल उवाच ।
और्वो नामाऽभवद्विप्रः श्रौतस्मार्तक्रियापरः ।
स्वधर्मरतया पत्न्या ब्रह्मनिष्ठो महायशाः ॥ २॥

तयोः कालेन सञ्जाता पुत्री तेजस्विनी प्रभो ।
तस्या नाम द्विजौ तौ तु शमीकेति प्रचक्रतुः ॥ ३॥

सा कन्या रूपसंयुक्ता गुणयुक्ता प्रजापते ।
सप्तवर्षवयः संस्था बभूव जनकप्रिया ॥ ४॥

तदर्थं ब्राह्मणः सोऽपि वरमिच्छन् समाययौ ।
शौनकस्याश्रमं तत्र ददर्श मुनिसत्तमम् ॥ ५॥

पूजितः शौनकेनैव मन्दारं शिष्यमुत्तमम् ।
शौनकस्य ददर्शाऽसौ विद्याढ्यं धौम्यनन्दनम् ॥ ६॥

सुशीलं गुरुसेवायां निरतं धर्मलालसम् ।
हर्षयुक्तोऽभवत्तत्र मेने जामातरं हृदि ॥ ७॥

विचार्य शौनकेनैव स्वगृहं प्रत्यपद्यत ।
सुदिने तं समानाय्य ददौ कन्यां महात्मने ॥ ८॥

तेन युक्ता शमी तत्र शुशुभे रूपसंयुता ।
रत्नकाञ्चनयोर्योगस्तथा जातः प्रजापते ॥ ९॥

पुनर्गते कियत्काले यौवनस्थां विभाव्य ताम् ।
शमीकां स समानेतुं मन्दारः प्रययौ स्वयम् ॥ १०॥

तं प्रपूज्य ददौ कन्यामौर्वो हर्षसमन्वितः ।
मन्दारः श्वशुरं नत्वा मार्गसंस्थो बभूव ह ॥ ११॥

कदा भृशुण्डिनामा यो गाणेशश्च महायशाः ।
विश्रान्तिमाश्रमे तस्य चक्रतुर्दम्पती परे ॥ १२॥

स्वकाश्रमविहारार्थं भृशुण्डी सङ्गतोऽभवत् ।
तं दृष्ट्वा शुण्डया युक्तं जहसतुश्च मूर्खवत् ॥ १३॥

शुण्डाया अपमानेन पापं प्राप्तं महाद्भुतम् ।
तेन सम्प्रेरितो योगी चुकोप रक्तलोचनः ॥ १४॥

उवाच तौ महायोगी भृशुण्डी च द्विजाधमौ ।
दृष्ट्वा जहसथुः शुण्डां पादपौ भवतं रुषा ॥ १५॥

शुण्डाया अपमानं यः करिष्यति नराधमः ।
स मे शत्रुर्न सन्देहो गजास्यस्यापमानतः ॥ १६॥

तौ तं भृशुण्डिनं विप्रौ प्रणेमतुः सुदुःखितौ ।
अज्ञानेन कृतं हास्यं क्षन्तुमर्हसि योगिप ॥ १७॥

उच्छापं वद विप्रेश दासौ ते नात्र संशयः ।
अत्यन्तं गणराजस्य प्रियौ कुरु च मानद ॥ १८॥

ततोऽतिकरुणाविष्टो जगाद मुनिसत्तमः ।
शुण्डाया अपमानेन मया शप्तौ न संशयः ॥ १९॥

अतः शुण्डाधरो देवः प्रसन्नश्च भविष्यति ।
तदा सर्वं शुभं पूर्णं युवयोर्वाञ्छितं भवेत् ॥ २०॥

ममाधीनं न किञ्चिद्वै शापदाता गजाननः ।
क्रोधहीनस्य मे क्रोधः प्रेरितस्य समाययौ ॥ २१॥

एवमुक्त्वा महायोगी स्वासनस्थो बभूव ह ।
तौ सद्यो वृक्षयोनिस्थौ बभूवतुः प्रजापते ॥ २२॥

अथ मासे गते विप्रः शौनकश्चिन्तयान्वितः ।
शिष्यान् गृह्य ययौ विप्रमौर्वं दुःखान् महामुनिः ॥ २३॥

तं पप्रच्छ शनैः सोऽपि मन्दारः कुत्र वर्तते ।
शमीकाया आनयने प्रेषितोऽयं मया सुतः ॥ २४॥

ततस्तं शोकसंयुक्तमौर्वो जगाद विस्मितः ।
दत्वा कन्यां मया सद्यः प्रेषितश्च त्वदन्तिके ॥ २५॥

(Page खं. ५ अ. २५ पान ५४)
श्रुत्वैवं शोकसंयुक्ता और्वशौनकमुख्यकाः ।
तयोः शोधनकामास्ते निसस्रुस्त्वरितास्ततः ॥ २६॥

तत्र मार्गे जनान् सर्वान् ग्रामस्थान् वनसंस्थितान् ।
पप्रच्छुस्ते समूचुस्तान् मासमात्राद् गतौ किल ॥ २७॥

एवं विचार्य ते याता भृशुण्ड्याश्रममुत्तमम् ।
तत्र विश्रान्तिकृत् स्थाने जनानां ददृशुस्तरू ॥ २८॥

अनुपेतौ ततो ज्ञात्वा शौनको ध्यानमाश्रितः ।
ज्ञात्वा भृशुण्डिना शप्तौ वृत्तान्तं तानवेदयत् ॥ २९॥

ततः सर्वान् महायोगी विसृज्य तपसि स्थितौ ।
शौनकौर्वौ महादुःखाद् गणेशाराधने रतौ ॥ ३०॥

अवायुभक्षभावेन ध्यानेन गणनायकम् ।
तोषयामासतुः प्रीत्या तयोरघविमुक्तये ॥ ३१॥

एवं द्वादशवर्षेषु गतेषु द्विरदाननः ।
आययौ तौ वरं दातुं भृशं तत् क्लेशतापितः ॥ ३२॥

दृष्ट्वा विघ्नेश्वरं तौ तु प्रणम्यापूज्य हर्षतः ।
गणाध्यक्षं तुष्टुवतुः प्रणम्य करसम्पुटैः ॥ ३३॥

शौनकौर्वौ ऊचतुः ।
नमस्ते गजवक्त्राय विघ्नेशाय परात्मने ।

अपाराय महेशाय हेरम्बाय नमो नमः ॥ ३४॥

संसारार्णवताराय मायामोहहराय ते ।
ब्रह्मेशाय शिवादिभ्यो योगदाय नमो नमः ॥ ३५॥

ज्येष्ठानां ज्येष्ठराजाय सर्वेषां पूज्यमूर्तये ।
आदिपूज्याय देवाय चान्तःस्थाय नमो नमः ॥ ३६॥

अनादये च सर्वेषां मात्रे पित्रे परात्मने ।
स्वानन्दवासिने तुभ्यं गणेशाय नमो नमः ॥ ३७॥

शूर्पकर्णाय शूराय लम्बोदराय ढुण्ढये ।
विघ्नकर्त्रे ह्यभक्तानां भक्तानां विघ्नहारिणे ॥ ३८॥

ब्रह्मेशाय नमस्तुभ्यं ब्रह्मभूतप्रदाय च ।
योगेशाय सुशान्ताय शान्तिदाय नमो नमः ॥ ३९॥

गुणान्तं न ययुर्यस्य शिवविष्ण्वादयोऽमराः ।
योगिनः सगुणस्यापि निर्गुणस्याऽत्र का कथा ॥ ४०॥

नमो नमः प्रसन्नस्त्वं भव स्वामिन् गजानन ।
धौम्यपुत्रं च मन्दारं शिष्यं मे तारयाऽधुना ॥ ४१॥

तारयस्व शमीमौर्वकन्यां तां नाथ विघ्नप ।
वृक्षयोनिगतौ तौ तु मानुषौ कुरु तादृशौ ॥ ४२॥

भक्तिं ते देहि हेरम्ब यया भ्रान्तिर्विनश्यति ।
दासौ ते पादपद्मस्य वाञ्छितं कुरु सर्वदा ॥ ४३॥

तयोर्वचनमाकर्ण्य जगाद गणनायकः ।
तौ भक्तौ तपसा युक्तौ भक्तिबद्धस्वभावतः ॥ ४४॥

श्रीगजानन उवाच ।
भृशुण्डिना च विप्रर्षी शप्तौ तौ दम्पती पुरा ।
ज्ञात्वा मदीयतुण्डस्यापमानान्नात्र संशयः ॥ ४५॥

भृशुण्डिनोऽतिभक्तस्य मम मिथ्यावचः कदा ।
न करोमि महाभागौ देहादधिक एव सः ॥ ४६॥

भृशुण्डिनोऽपमानश्च क्रियते विविधैर्जनैः ।
न तत्र कोपसंयुक्तो भवते मुनिसत्तमः ॥ ४७॥

मदीयमपमानं स सहते न कदाचन ।
अतोऽहं तस्य वाक्यं वै न करोमि निरर्थकम् ॥ ४८॥

भवद्ध्यां तपसा बद्धः करिष्यामि हितावहम् ।
शृणुतं मे वचो रम्यं वरं दास्यामि मुख्यकम् ॥ ४९॥

मन्दारस्य च शम्याश्च मूले स्थास्यामि निश्चलः ।
मद्रूपौ वृक्षजातीनां सर्ववन्द्यौ भविष्यतः ॥ ५०॥

(Page खं. ५ अ. २५ पान ५५)
देवास्तौ प्रणमस्यन्ति किं पुनर्जन्तवो मताः ।
दर्शनात् स्पर्शनाच्चैव पापघ्नौ तौ भविष्यतः ॥ ५१॥

मत्प्रियौ सर्वभावेन देवानां प्रियरूपिणौ ।
भविष्यतो विशेषेण वृक्षराजौ महामुनी ॥ ५२॥

शमीपत्रेण मां विप्रा पूजयिष्यन्ति मानवाः ।
तेषां वाञ्छां सदाऽहं वै पूरयिष्यामि शाश्वतीम् ॥ ५३॥

मन्दारपुष्पमेकं समर्पयिष्यति मे नरः ।
तेन हृष्टो भविष्यामि फलं दास्यामि वाञ्छितम् ॥ ५४॥

कृता नानाविधा पूजा मदीया मानवेन च ।
दूर्वाहीना वृथा सर्वा भवत्यत्र न संशयः ॥ ५५॥

अद्य प्रभृति विप्रेशौ शमीपत्रेण संयुता ।
मन्दारकुसुमेनैव सफला सा भविष्यति ॥ ५६॥

शमीपत्रं नरेणैव भवेन् मयि समर्पितम् ।
न तु ऋतुशतेनैव तुल्यं तेभ्योऽधिकं मतम् ॥ ५७॥

शमीपत्रेण सन्तुष्टो भविष्यामि निरन्तरम् ।
मन्दारपुष्पकेणैव को वदेत्तु तयोः फलम् ॥ ५८॥

नित्यं शमीं नमेद्यस्तु पूजयेद्वा तु संस्पृशेत् ।
स सप्तकुलसंयुक्तः स्वानन्दं मे गमिष्यति ॥ ५९॥

तथा मन्दारवृक्षं यो नमेत् सम्पूजयेन्नरः ।
संस्पृशेत् सोऽपि स्वानन्दं व्रजेत् सप्तकुलैर्युतः ॥ ६०॥

प्रदक्षिणां प्रकुर्वीत शमीमन्दारवृक्षयोः ।
सप्तद्वीपवती पृथ्व्याः कृता तेन प्रदक्षिणा ॥ ६१॥

यदि भावेन वृक्षस्य प्रदक्षिणा कृता भवेत् ।
शतभूमिप्रदाक्षिण्यसमं पुण्यं लभेन्नरः ॥ ६२॥

बहुनाऽत्र किमुक्तेन मद्रूपौ वृक्षजातिषु ।
तयोश्च महिमानं को भवेद्वर्णयितुं क्षमः ॥ ६३॥

वृक्षबुद्ध्या शमीं यो वै मन्दारं यदि पश्यति ।
स नारकी नरो विप्रौ भविष्यति न संशयः ॥ ६४॥

शमीं मन्दारकं वीक्ष्य न नमेद्यो नराधमः ।
दक्षिणं कुरुते नैव नष्टपुण्यो भवेत्तदा ॥ ६५॥

शमीं यश्छेदयेद्वापि मन्दारं मुनिसत्तमौ ।
नरकेषु महापापी पतिष्यति न संशयः ॥ ६६॥

शाखां पत्रं तु यः पापी छेदयिष्यति मानवः ।
नारकी स भवेन्नूनं दर्शनात् पापदो भवेत् ॥ ६७॥

शमीं यो निन्दयेद्वा यो मन्दारं वृक्षसत्तमम् ।
सर्वभाग्यविहीनः स नारकी जायते ततः ॥ ६८॥

मद्रूपेणैव मन्दारं शमीं यस्तु प्रपश्यति ।
स भुक्त्वा विविधान् भोगानन्ते स्वानन्दगो भवेत् ॥ ६९॥

मन्दारमूलमादाय मूर्तिं कृत्वा मदीयिकाम् ।
पूजयिष्यन्ति मद्भक्तास्तेषां साध्योऽहमञ्जसा ॥ ७०॥

मन्दारमूलजा मूर्तिः सद्यः सिद्धिप्रदायिका ।
तद्वन्नैवान्यसम्भूता मम मूर्तिर्भविष्यति ॥ ७१॥

मन्दारमूर्तिगं पूजेत् शमीपत्रेण भावतः ।
दूर्वामन्दारपुष्पैश्च त्रयं सुदुर्लभं मतम् ॥ ७२॥

शमी मन्दारदूर्वाश्च त्रयमेकत्र कारितम् ।
भक्तेन स तु मत्तुल्यो पूजायां मे भविष्यति ॥ ७३॥

शमीमन्दारजां मालां कृत्वा जपं समाचरेत् ।
अनन्तफलभोक्ताऽसौ भविष्यति न संशयः ॥ ७४॥

शमीमन्दारजां मालां दधानः पुरुषो भवेत् ।
तस्य देहं समालोक्य विघ्ना नश्यन्ति पापकाः ॥ ७५॥

अन्ते शमीभवं पत्रं मन्दारकुसुमं तथा ।
(Page खं. ५ अ. २६ पान ५६)
दूर्वापत्रं धृतं येन धरिष्यति यमो न तम् ॥ ७६ ॥

शमीमन्दारसामीप्ये पूजयेन् मां च मानवः ।
तेनाप्यसङ्ख्यका पूजा कृता मे नाऽत्र संशयः ॥ ७७॥

एवमुक्त्वा पुनस्तौ स जगाद गणनायकः ।
मद्भक्तिं यदि विप्रेशाविच्छथो भावसंयुतौ ॥ ७८॥

तदा मन्दारवृक्षस्य मूलजां मूर्तिमादरात् ।
कृत्वा पूजां प्रकुर्वाथां यथा विधिसमन्वितौ ॥ ७९॥

शमीमन्दारदूर्वाभिः सन्तुष्टोऽहं भवामि तु ।
नान्यथा पूर्णभावेन मम तुष्टिकरं भवेत् ॥ ८० ॥

तुलसीवर्जितां पूजां मदीयां कुरुतं सदा ।
शमीमन्दारमालाभिर्जपं मे कुरुतं सदा ॥ ८१ ॥

एवमुक्त्वा गणाधीशस्तत्रैवान्तरधीयत ।
विप्रौ बभूवतुर्हर्षसमायुक्तौ विशेषतः ॥ ८२॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पञ्चमे खण्डे लम्बोदरचरिते शमीमन्दारवरप्रदानं नाम पञ्चविंशतितमोऽध्यायः ॥ ५.२५

## ५.२६ शमीमन्दारस्पर्शमहिमावर्णनं नाम षड्विंशतितमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
ततो धौम्यं समागम्य शौनको हर्षसंयुतः ।
कथयामास वृत्तान्तं सोऽपि संहर्षितोऽभवत् ॥ १॥

धन्यो मे वृक्षगः पुत्रः सर्वसिद्धिप्रदायकः ।

साक्षाद्गणेशरूपश्च सर्वेषां वन्द्य आदरात् ॥ २॥

शमीसमीपगो हर्षसंयुक्तस्तत और्वकः ।
तताप तप उग्रं स शमीसंयोगकारणात् ॥ ३॥

स एव मरणे तत्र शमीगर्भस्थितो ह्यभूत् ।
अग्निरौर्वाभिधानश्च गाणपत्यो महायशाः ॥ ४॥

कल्पान्ते गणनाथं स ययौ योगसमन्वितः ।
शौनकश्च तथा ढुण्ढिमभजत् स्नेहसंयुतः ॥ ५॥

मन्दारमूलजां मूर्तिं कृत्वा पूजापरायणः ।
शमीमन्दारदूर्वाभिस्तोषयामास विघ्नपम् ॥ ६॥

शमीमन्दारमालाभिः शुशुभे ब्राह्मणोत्तमः ।
गाणपत्यस्वरूपेण तथा धौम्यो बभूव ह ॥ ७॥

भृशुण्डी तद्भवं वृत्तं श्रुत्वा हर्षसमन्वितः ।
आगत्य स्वाश्रमे संस्थौ ननाम वृक्षसत्तमौ ॥ ८॥

नित्यं पुपूज च शमीं मन्दारं भक्तिसंयुतः ।
शमीमन्दारदूर्वाभिः पूजयामास विघ्नपम् ॥ ९॥

शमीमन्दारमालाभिर्भूषितो मुनिसत्तमः ।
शुशुभे गाणपत्येषु गणराज इवापरः ॥ १०॥

एवं ये ये स्थिता दक्ष गाणपत्या विशेषतः ।
ते ते सर्वे शमीमन्दारपूजासंयुता बभुः ॥ ११॥

एतत्ते कथितं सर्वं शमीमन्दारसम्भवम् ।
माहात्म्यं पुनरन्यत्त्वं शृणु पापहरं परम् ॥ १२॥

द्राविडे शूद्रयोनिस्थो बभूवे पापकारकः ।
वनं गत्वा जनान् हत्वा द्रव्यलोभी दुरात्मवान् ॥ १३॥

एकदा वनमध्यस्थोऽभवत् व्याघ्रेण धर्षितः ।
पपात भयभीतश्च सद्यस्तेन प्रभक्षितः ॥ १४॥

तत्र वायुबलेनैव शमीपत्रं समाययौ ।
(Page खं. ५ अ. २६ पान ५७)
तस्य स्पर्शोऽभवत्तस्य दैवयोगात् प्रजापते ॥ १५॥

तं नेतुं यमदूताश्च समाजग्मुर्महाबलाः ।
गाणेशास्तत्र संयाताः समकाले नराधमम् ॥ १६॥

यमदूतांस्तिरस्कृत्य गाणेशास्तं प्रगृह्य वै ।
गन्तुं समुद्यता यावत्तावत्ते तान् प्रदुद्रुवुः ॥ १७॥

मुसलेन हताः पेतुर्यमदूता महीतले ।
गाणेशास्तं प्रगृह्यैव ब्रह्मभूतं प्रचक्रिरे ॥ १८॥

यमदूता यमं गत्वा शोकदुःखसमन्विताः ।
वृत्तान्तं कथयामासुः क्रोधेन परिपूरिताः ॥ १९॥

यामा ऊचुः ।
स्वामिन् शास्त्रकराः केचिद्बभूवुर्भूमिमण्डले ।
त्वदाज्ञावशगं सर्वं वर्तते कुत्र तद् गतम् ॥ २०॥

त्वं साक्षाद्धर्मराजश्च यथा वेदार्थवान् प्रभुः ।
वर्तसे तेन सर्वं वै त्वदाज्ञावशगं मतम् ॥ २१॥

शम्भुविष्णुमुखा देवा धर्माधारा भवन्ति वै ।
धर्मयुक्तस्वभावेन वर्तेरन्नात्र संशयः ॥ २२॥

महापापी विशालाक्षो नाम शूद्रो ममार ह ।
तं गृहीतुं वयं तत्र गताः पाशधराः प्रभो ॥ २३॥

अकस्मात्तत्र संयाता पुरुषाः परमाद्भुताः ।
शुण्डादण्डधराः सर्वे चतुर्बाहुविराजिताः ॥ २४॥

अस्मांस्ते तु तिरस्कृत्य तं शूद्रं गृह्य सूर्यज ।
गन्तुं समुद्यता यावत्तावद्योद्धुं वयं स्थिताः ॥ २५॥

निपात्य नो महावीर्या मुसलेन प्रगृह्य तम् ।
गताः कुत्र न जानीमोऽधुना सर्वे महामते ॥ २६॥

अतस्त्वं यत्नसंयुक्तो मदं तेषां हरस्व च ।
एवमुक्त्वा प्रणम्यैनं स्थिताः प्राञ्जलयोऽभवन् ॥ २७॥

मुद्गल उवाच ।
तेषां तद्वचनं श्रुत्वा ध्यानस्थोऽभून् महामतिः ।

यमः सर्वं विदित्वा तु भयं दध्रे महायशाः ॥ २८॥

ध्यात्वा गजाननं देवं हृष्टरोमा च साश्रुकः ।
हृदि प्रणम्य विघ्नेशमुवाच भयसङ्कुलः ॥ २९॥

मदीयकिङ्करैः स्वामिन्नपराधः कृतो महान् ।
तं क्षमस्व दयासिन्धो प्रभो ह्यज्ञानसंयुतैः ॥ ३०॥

गाणपत्यैर्महाभागैर्विवादो नैव शोभनः ।
स एव तु मया प्राप्तो भाग्यहीनबलेन च ॥ ३१॥

एवं क्षमाप्य विघ्नेशं स्थितं मनसि किङ्करान् ।
आकार्य भानुजः सर्वान् जगाद वचनं हितम् ॥ ३२॥

यम उवाच ।
मन्दारमालाशमिकाष्ठजा च यस्यैव देहे भवति प्रमाणम् ।
पुष्पं तयोः पत्रयुतं च शूराः सन्त्यज्य दूरं चरत प्रभीताः ॥ ३३॥

दूर्वायुतं विघ्नहरस्य गाथां सङ्गायमानं यदि पापयुक्तम् ।
पूजादिकारं गणनायकस्य सन्त्यज्य दूरं चरत प्रभीताः ॥ ३४॥

गणेश हेरम्ब गजाननेति महोदर स्वानुभवप्रकाशिन् ।
वरिष्ठ सिद्धिप्रिय बुद्धिनाथ वदन्तमेवं त्यजत प्रभीताः ॥ ३५॥

अनेकविघ्नान्तक वक्रतुण्ड स्वसंज्ञवासिंश्च चतुर्भुजेति ।
कवीश देवान्तकनाशकारिन् वदन्तमेवं त्यजत प्रभीताः ॥ ३६॥

महेशसूनो गजदैत्यशत्रो वरेण्यसूनो विकट त्रिनेत्र ।
परेश धरणीधर एकदन्त वदन्तमेवं त्यजत प्रभीताः ॥ ३७॥

प्रमोदमोदेति नरान्तकारे षडूर्मिहन्तर्गजकर्ण ढुण्ढे ।
द्वन्द्वारिसिन्धौ स्थिरभावकारिन् वदन्तमेवं त्यजत प्रभीताः ॥ ३८॥

(Page खं. ५ अ. २५ पान ५८)
विनायक ज्ञानविघातशत्रो पराशरस्यात्मज विष्णुपुत्र ।
अनादिपूज्याखुग सर्वपूज्य वदन्तमेवं त्यजत प्रभीताः ॥ ३९॥

विधेर्ज लम्बोदर धूम्रवर्ण मयूरपालेति मयूरवाहिन् ।
सुरासुरैः सेवितपादपद्म वदन्तमेवं त्यजत प्रभीताः ॥ ४०॥

वरिन् महाखुध्वज शूर्पकर्ण शिवाज सिंहस्थ अनन्तवाह ।

दितौज विघ्नेश्वर शेषनाभे वदन्तमेवं त्यजत प्रभीताः ॥ ४१॥

अणोरणीयन् महतो महीयन् रवेर्ज योगेश वरिष्ठराज ।
निधीश मन्त्रेश च शेषपुत्र वदन्तमेवं त्यजत प्रभीताः ॥ ४२॥

वरप्रदातर्ह्यदितेश्च सूनो पराशरज्ञानद तारवक्त्र ।
गुहाग्रज ब्रह्मप पार्श्वपुत्र वदन्तमेवं त्यजत प्रभीताः ॥ ४३॥

सिन्धोश्च शत्रो परशुप्रपाणे शमीश पुष्पप्रिय विघ्नहारिन् ।
दूर्वाभरैरर्चित देवदेव वदन्तमेवं त्यजत प्रभीताः ॥ ४४॥

धियः प्रदातश्च शमीप्रियेति सुसिद्धिदातश्च सुशान्तिदातः ।
अमेयमायामितविक्रमेमि वदन्तमेवं त्यजत प्रभीताः ॥ ४५॥

द्विधा चतुर्थीप्रिय कश्यपाञ्ज धनप्रद ज्ञानप्रदप्रकाश ।
चिन्तामणे चित्तविहारकारिन् वदन्तमेवं त्यजत प्रभीताः ॥ ४६॥

यमस्य शत्रो अभिमानशत्रो विधेर्जहन्तः कपिलस्य सूनो ।
विदेह स्वानन्द अयोगयोग वदन्तमेवं त्यजत प्रभीताः ॥ ४७॥

गणस्य शत्रो कमलस्य शत्रो समस्थ भावज्ञ च भालचन्द्र ।
अनादिमध्यान्तमयप्रचारिन् वदन्तमेवं त्यजत प्रभीताः ॥ ४८॥

विभो जगद्रूप गुणेश भूमन् पुष्टेः पते आखुगतेति बोध ।
कर्तश्च पातश्च तु संहरेति वदन्तमेवं त्यजत प्रभीताः ॥ ४९॥

इदमष्टोत्तरशतं नाम्नां तत् प्रपठन्ति ये ।
शृण्वन्ति तेषु कुरुत भीता मा वै प्रवेशनम् ॥ ५०॥

भुक्तिमुक्तिप्रदं ढुण्ढेर्धनधान्यप्रवर्धनम् ।
ब्रह्मभूयकरं स्तोत्रं जपतो नित्यमादरात् ॥ ५१॥

यत्र कुत्र गणेशस्य चिह्नयुक्तानि वै भटाः ।
धामानि तत्र कुरुत सम्भीता मा प्रवेशनम् ॥ ५२॥

तेन संस्थापिताः सर्वे स्वस्वकार्येषु सेवकाः ।
केशाद्यास्तत्र के यूयं वयं भजत तं सदा ॥ ५३॥

एवमुक्त्वा यमः सर्वान् किङ्करान् मौनमादधे ।
यामाः सर्वे गणेशानं भजन्ते भावसंयुताः ॥ ५४॥

इदं शमीभवं पुण्यं माहात्म्यं यः शृणोति चेत् ।
पठति सिद्धिदं तस्य मन्दारस्य भविष्यति ॥ ५५॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पञ्चमे खण्डे लम्बोदरचरिते शमीमन्दारस्पर्शमहिमावर्णनं नाम षड्विंशतितमोऽध्यायः ॥ ५.२६

(Page खं. ५ अ. २७ पान ५९)

## ५.२७ दूर्वोत्पत्तिकथनं नाम सप्तविंशतितमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

दक्ष उवाच ।
दूर्वायाश्चरितं हर्षकारकं ब्रूहि मुद्गल ।
अहो शम्यासमं नास्ति मन्दारेण पवित्रकम् ॥ १॥

मुद्गल उवाच ।
पुराऽऽदौ देवदेवेशो ब्रह्मा सृष्ट्वा चराचरम् ।
तेषामन्नार्थमत्यन्तचिन्तायुक्तो बभूव ह ॥ २॥

ध्यात्वा गजाननं देवं संस्थितः प्रपितामहः ।
तस्य रोमभ्य एका वै देवी सन्निःसृता बभौ ॥ ३॥

सर्वतः पाणिपादां तां सहस्रवदनां पराम् ।
सहस्रावयवैः सर्वैः शोभमानां ददर्श सः ॥ ४॥

ततोऽतिहर्षितो ब्रह्मा बभूवे सर्वधारकः ।
ज्ञात्वा तामन्नरूपां वै सर्वपोषणकारिणीम् ॥ ५॥

धातारं तं प्रणम्याऽसौ संस्थिता करसम्पुटा ।
आज्ञां कुरु जगद्धातः किं करोमि पितामह ॥ ६॥

ब्रह्मोवाच ।
सर्वेषामन्नभूता त्वं दूर्वानाम्नी भविष्यसि ।
तपस्व च ततः सर्वमन्नं सृज विधानतः ॥ ७॥

तथेति तं प्रणम्यैव तताप तप उत्तमम् ।
गणेशं मनसि ध्यात्वा निराहारसमन्विता ॥ ८॥

एकाक्षरस्य मन्त्रस्य जपेन द्विरदाननः ।
दिव्यवर्षसहस्रेण ययौ तां वरदायकः ॥ ९॥

तं दृष्ट्वा सहसोत्थाय प्रणनाम पुपूज सा ।
अथर्वशिरसा देवं तुष्टाव करसम्पुटा ॥ १०॥

तामुवाच गणेशानः सृष्टिं नानाविधां सदा ।
करिष्यसि महाभागे सर्ववन्द्या भविष्यसि ॥ ११॥

एवमुक्त्वा गणाधीशोंऽतर्धानं प्रजगाम ह ।
साऽपि हर्षसमायुक्ता सृष्टिं कर्तुं मनो दधे ॥ १२॥

तस्या मस्तकभागाद् वै स्वर्गान्नं विविधं महत् ।
निःसृतं तेन स्वर्गस्था भुञ्जते विविधान् रसान् ॥ १३॥

उदराद् भूमिसंस्थानां निःसृतं विविधं विधे ।
अन्नं तेनैव भूमिस्था भुञ्जते विविधान् रसान् ॥ १४॥

पातालवासिनां पद्भ्यामन्नं नानाविधं परम् ।
भुञ्जते षड्रसान्नित्यं निःसृतं तेन तद्गताः ॥ १५॥

अङ्गप्रत्यङ्गरूपेभ्यो नानान्नं ससृजे प्रभो ।
देवी तेन तु सन्तुष्टा बभूवुः सर्वजन्तवः ॥ १६॥

हृष्टपुष्टजनान् वीक्ष्य ब्रह्मा सन्तोषमादधे ।
तामागत्य द्विजैर्मन्त्रैरभिषेकं चकार ह ॥ १७॥

अन्नानामाधिपत्ये चाभिषिक्ता ब्रह्मणा पुरा ।
शुशुभे सर्वमान्या सा देवी दूर्वा विशेषतः ॥ १८॥

राज्यश्रीसंयुता देवी मदयुक्ता बभूव ह ।
विसस्मार जपं मन्त्रं गणेशस्य प्रजापते ॥ १९॥

ततो विघ्नाकुला जाता स्पर्धां चक्रे विशेषतः ।
पार्वत्या नित्यमानन्दादन्नपूर्णाहमादरात् ॥ २०॥

जगदम्बा च सर्वेषामन्नपूर्णत्वकारणात् ।
साऽहमन्नस्वरूपस्था वृथेयं गर्वमादधे ॥ २१॥

तस्याश्चेष्टितमाज्ञाय क्रोधयुक्ता जगन्मयी ।
दौरात्म्यसहनं कृत्वा ह्यतिष्ठच्छिवसन्निधौ ॥ २२॥

एकदा चन्द्रगेहे वै बभूव ह महोत्सवः ।
तत्र देवादिकाः सर्वे सस्त्रीकाश्च समाययुः ॥ २३॥

तत्र दूर्वा मदोत्सिक्ता निनिन्द जगदम्बिकाम् ।
वृथेयं जगदम्बा वै नाम्ना ख्याता बभूव ह ॥ २४॥

इत्यादिविविधैर्वाक्यैर्निनिन्द जगदम्बिकाम् ।
ततः क्रोधसमायुक्ता पार्वती तां शशाप ह ॥ २५॥

पार्वत्युवाच ।
मदीयरोमकूपस्था निःसृता त्वं न संशयः ।
वृथा मां स्पर्धसे दुष्टे पतस्व तृणरूपिणी ॥ २६॥

(Page खं. ५ अ. २७ पान ६०)
पृथिव्यां तृणरूपा च सा बभूव प्रजापते ।
तदादि सर्ववन्द्येयं दूर्वा परमपावनी ॥ २७॥

ततोऽतिदुःखसंयुक्ता सस्मार द्विरदाननम् ।
भो क्षमस्वापराधं मे मन्त्रत्यागकृतं प्रभो ॥ २८॥

गत्वा वनान्तरे दूर्वा तताप तप उत्तमम् ।
ध्यात्वा विघ्नेश्वरं देवं मन्त्रजपपरायणा ॥ २९॥

गते वर्षशते पूर्णे प्रसन्नोऽभूद् गजाननः ।
तामाययौ वरं दातुं भक्तिस्थां भजनप्रियः ॥ ३०॥

आगतं गणराजं सा दृष्ट्वा ननाम भावतः ।
संहृष्टा पूज्य तुष्टाव कृत्वा करपुटं विधे ॥ ३१॥

दूर्वोवाच ।
गणेशाय नमस्तुभ्यं विघ्नराजाय ते नमः ।
भक्तानां विघ्नसंहर्त्रे त्वभक्तानां भयङ्कर ॥ ३२॥

अनन्तायाप्रमेयाय नानालीलाधराय च ।
हेरम्बाय महेशानां नमः पूज्याय ते नमः ॥ ३३॥

सर्वपूज्याय सर्वादिपूज्याय ब्रह्मरूपिणे ।
ब्रह्माकाराय सर्वेश ब्रह्मणस्पतये नमः ॥ ३४॥

अनाकाराय साकारमूर्तये ब्रह्मरूपिणे ।
शान्तिभ्यः शान्तिदात्रे ते परेशाय नमो नमः ॥ ३५॥

लम्बोदराय चौरेशवाहनाय परात्मने ।
चतुर्भुजाय सर्वेषां मात्रे पित्रे नमो नमः ॥ ३६॥

ज्येष्ठेभ्यो ज्येष्ठराजाय ज्येष्ठपदप्रदायिने ।
महोदराय पूर्णाय पूर्णानन्दाय ते नमः ॥ ३७॥

स्वानन्दवासिने तुभ्यं सिद्धिबुद्धिमयाय च ।
सिद्धिबुद्धिपते नाथ भक्तेशाय नमो नमः ॥ ३८॥

किं स्तौमि त्वां गणाधीश यत्र वेदा विसिस्मिरे ।
अतस्त्वां प्रणमाम्येव तेन तुष्टो भव प्रभो ॥ ३९॥

एवं स्तुत्वा गणेशानं भक्तियुक्ता ननर्त ह ।
जगाद गणराजस्तु दूर्वां तां हर्षसंयुतः ॥ ४०॥

श्रीगणेश उवाच ।
त्वया कृतमिदं स्तोत्रमपराधसहं भवेत् ।
मां स्तौति तस्य दूर्वेऽहमपराधं सहाम्यहम् ॥ ४१॥

यं यं चिन्तयते कामं तं तं दास्यामि सर्वदा ।
भुक्तिमुक्तिप्रदं स्तोत्रं भविष्यति सुसिद्धिदम् ॥ ४२॥

वरं वरय दास्यामि चित्तस्थं भक्तितोषितः ।
क्रोधयुक्तोऽपि देवि त्वां मन्त्रत्यागकरीं पुनः ॥ ४३॥

श्रुत्वा तं भयसंयुक्ता जगाद वाक्यमुत्तमम् ।
दूर्वा लम्बोदरं प्रीत्या साश्रुनेत्रा प्रजापते ॥ ४४॥

दूर्वोवाच ।
वरदोऽसि यदा नाथ तदा ते भक्तिमुत्तमाम् ।
दृढां देहि गणाध्यक्ष तया सर्वं शुभं भवेत् ॥ ४५॥

अन्यच्च मदसंयुक्तां जगदम्बां गजानन ।
स्पर्धेहं तत्कलांशा वै तया शप्ताऽतिदारुणम् ॥ ४६॥

तृणरूपा भविष्यामि पतिष्यामि धरातले ।
तदर्थं त्वामनुप्राप्ता रक्ष मां महतो भयात् ॥ ४७॥

श्रीगजानन उवाच ।
मा कुरुष्व वृथा चिन्तां दूर्वे मे शरणागते ।
सर्वं शुभं करिष्यामि भविष्यामि नियन्त्रितः ॥ ४८॥

अंशेन तृणरूपा त्वं भविष्यसि महीतले ।
देवी देहधरा स्वर्गे चरिष्यसि यथा पुरा ॥ ४९॥

पृथिव्यां तृणरूपा त्वममृतरूपधारिका ।
शतमूला प्रकाण्डाद् वै प्ररोहा च शताङ्कुरा ॥ ५०॥

सर्वमान्या सर्वपूज्या देवादीनां सदा प्रिया ।
(Page खं. ५ अ. २७ पान ६१)
भविष्यसि न सन्देहो मद्वरादन्ननायिके ॥ ५१॥

महामङ्गलदा प्रोक्ता मम प्रीतिविवर्धिनी ।
भविष्यसि तु लोकानां शुभमङ्गलदायिका ॥ ५२॥

त्वत्पत्रेण नरा भूमावर्चयिष्यन्ति देवपान् ।
न त्वत्समं तु पत्रेषु पुण्यदं प्रभविष्यति ॥ ५३॥

शक्तेश्चैवावतारा ये लक्ष्मीललितिकादयः ।
तासां प्रिया विशेषेण भविष्यसि महाशुभे ॥ ५४॥

शापिता गिरिपुत्र्या त्वं सा त्वां नैव स्पृशेत् कदा ।
अन्यत्र मान्यभावेन भविष्यसि न संशयः ॥ ५५॥

मदीया भक्तिरत्यन्तं दृढा ते प्रभविष्यति ।
मच्चित्ता मद्गतप्राणा भविष्यसि च दूर्विके ॥ ५६॥

मदीयामिच्छसि भक्तिमतस्तेऽहं सुहर्षितः ।
करिष्यामि सदा देवि मम प्रीतिविवर्धिनीम् ॥ ५७॥

दूर्वापत्रं विना देवि पूजयिष्यन्ति मां नराः ।
तेषां नैव फलं तस्याः पूजायाः प्रभविष्यति ॥ ५८॥

दूर्वासमं न मे किञ्चित् पूजायां सुप्रियं भवेत् ।
विना दूर्वां निराहारी भविष्यामि निरन्तरम् ॥ ५९॥

त्यक्त्वा दूर्वादलं ये वै पूजयिष्यन्ति मानवाः ।
शत्रवस्ते मता नित्यं नरकेषु पचन्तु ते ॥ ६०॥

येनार्पितं च पूजायां दूर्वापत्रं महामते ।
तेनापारमयं सर्वं दत्तं मह्यं विशेषतः ॥ ६१॥

दूर्वापत्रेण सन्तुष्टो दास्यामि सकलं च मे ।
ऐश्वर्यं तदपि प्राज्ञे न समं दूर्वया भवेत् ॥ ६२॥

ये मद्भक्ताश्च तैर्नित्यं कर्तव्यं दूर्वया युतम् ।
पूजनं मे सदा देवि जितोऽहं नात्र संशयः ॥ ६३॥

एवमुक्त्वा गणेशानोऽतर्दधे च प्रजापते ।
दूर्वा हर्षसमायुक्ता विघ्नेशं भजते परम् ॥ ६४॥

यथा लम्बोदरेणैव कथितं तादृशं नराः ।
देवेशाद्यास्ततश्चक्रुः पार्वती सा विशेषतः ॥ ६५॥

सर्वमङ्गलरूपा सा बभूवे पापनाशिनी ।
गणेशवरदानेन गाणपत्या तथाऽभवत् ॥ ६६॥

एतत्ते कथितं सर्वं दूर्वामाहात्म्यमुत्तमम् ।
शृण्वते पठते तस्मै भुक्तिमुक्तिप्रदं भवेत् ॥ ६७॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
पञ्चमे खण्डे लम्बोदरचरिते दूर्वोत्पत्तिकथनं नाम सप्तविंशतितमोऽध्यायः ॥ ५.२७

## ५.२८ दूर्वापत्रस्पर्शमहिमावर्णनं नामाष्टाविंशतितमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
अत्र ते वर्णयिष्येहमितिहासं पुरातनम् ।
दूर्वाया महिमा यत्र ज्ञायते मानवैः परः ॥ १॥

दण्डकारण्यदेशस्थो बभूवान्त्यजजः पुमान् ।
पिशुनो नाम दुर्बुद्धिः पापकर्मपरायणः ॥ २॥

चौरकर्मा वने गत्वा जनान् जघान दारुणः ।
क्वचित् परस्त्रियं दृष्ट्वैकाकिनीमयभत् खलः ॥ ३॥

शिश्नोदरपरो भूत्वा विचचार वनान्तरे ।
ग्रामे च नगरे वाऽपि शस्त्रधारी दुरात्मवान् ॥ ४॥

ब्रह्महत्यादिकं पापमपारं स चकार ह ।
न वक्तुं शक्यते दक्ष मया तस्य चरित्रकम् ॥ ५॥

एकदा वनसंस्थोऽयं द्विजं दृष्ट्वा महाखलः ।
कोटरात् स विनिःसृत्याधावच्छस्त्रधरः स्वयम् ॥ ६॥

तमागतं समालोक्य कालं दण्डधरं यथा ।
(Page खं. ५ अ. २८ पान ६२)
पपाल स द्विजस्तस्मात् हाहाकारकरो भृशम् ॥ ७॥

द्विजशब्दं समाकर्ण्य क्षत्रिया आगता वनात् ।
दैवयोगेन पञ्चैव समीपे मार्गयायिनः ॥ ८॥

तैः शस्त्रैः स हतः पापी ममार च पपात ह ।
ब्राह्मणो हर्षसंयुक्तः स्वाश्रमं चागतोऽभवत् ॥ ९॥

ततो यामाः प्रगृह्यैव पिशुनं तं महाखलम् ।
रौरवे ते विनिक्षिप्य नरके पाचयंस्तदा ॥ १०॥

पञ्चमे दिवसे प्राप्ते तत्राश्चर्यं बभूव वै ।
नरकः शान्तरूपश्च यातनावर्जितोऽभवत् ॥ ११॥

तं दृष्ट्वा परमाश्चर्यं यमदूता यमं ययुः ।
वृत्तान्तं कथयामासुर्नरकस्य सुशान्तिजम् ॥ १२॥

तच्छ्रुत्वा विस्मितो धर्मो ध्यानसंस्थो बभूव ह ।
ज्ञात्वा तान् कथयामास स्मृत्वा लम्बोदरं प्रभुः ॥ १३॥

धर्मराज उवाच ।
पिशुनोऽयं महापापी चाण्डालो नाऽत्र संशयः ।
न योग्यो नरके दूता अधुना पुण्यवानभूत् ॥ १४॥

यत्राऽयं तु मृतस्तत्र गाणपत्यः समागतः ।
तस्य मस्तकगा दूर्वा पपात पिशुनोपरि ॥ १५॥

यस्य स्पर्शो भवेद् दूता अस्थिकस्य शवस्य वा ।
तस्य पापं लयं सर्वं गमिष्यति न संशयः ॥ १६॥

पुण्यराशिर्भवेत् सोऽपि सर्वमान्यो विशेषतः ।
अत एनं तु निष्कास्यानयन्तु मम सन्निधौ ॥ १७॥

यमस्य वचनं श्रुत्वा विस्मितास्ते समाययुः ।
निष्कासितुं समुद्युक्तास्तावच्चित्रं बभूव ह ॥ १८॥

गणेशदूतसंयुक्तं विमानं नेतुमाययौ ।
तं गृह्य गाणपत्यास्ते ययुः स्वानन्दकं पुरम् ॥ १९॥

पिशुनं ब्रह्मभूतं ते चक्रुर्हर्षसमन्विताः ।
पूर्वदेहस्य दूर्वायाः स्पर्शे भक्तिपरायणाः ॥ २०॥

धर्मोऽतिविस्मितो भूत्वा तान् जगाद स्वसेवकान् ।
अहो पश्यत दूतेशा दूर्वामाहात्म्यमुत्कटम् ॥ २१॥

धन्योऽयं पिशुनो पापी यस्य देहे समागता ।
दूर्वा यया विशेषेण योगिनां पदगोऽभवत् ॥ २२॥

महिमानं तु दूर्वायाः को जानाति समग्रकम् ।
शवस्पर्शेन दूतेशा ब्रह्मभूतपदप्रदम् ॥ २३॥

तानुक्त्वा साश्रुनेत्रः स बभूव रविनन्दनः ।
गणेशं मन्यते नित्यं भजते भक्तिसंयुतः ॥ २४॥

इदं दूर्वाभवं चित्रं माहात्म्यं यः शृणोति चेत् ।
पठति तस्य विघ्नेशो वाञ्छितं ददते सदा ॥ २५॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पञ्चमे खण्डे लम्बोदरचरिते दूर्वापत्रस्पर्शमहिमावर्णनं नामाष्टाविंशतितमोऽध्यायः ॥ ५.२८

(Page खं. ५ अ. २९ पान ६३)

## ५.२९ त्रिशिरसश्चरितवर्णनं नाम एकोनत्रिंशत्तमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
अन्यत्त्वं शृणु माहात्म्यं दूर्वायाः स्वसुखप्रदम् ।
यया तृप्तिसमायुक्तो बभूव द्विरदाननः ॥ १॥

एकदा नारदो योगी जगाम जनकालयम् ।
पूजितो जनकं सोऽपि जगाद हर्षसंयुतः ॥ २॥

नारद उवाच ।
धन्यस्त्वं गणनाथस्य भक्तः परमभाविकः ।
मनेप्सितं गणाध्यक्षो ददते ते नियन्त्रितः ॥ ३॥

नारदस्य वचः श्रुत्वा तं प्रहस्य महामुनिम् ।
जगाद जनको वाक्यं योगयुक्तं स योगवित् ॥ ४॥

जनक उवाच ।
याज्ञवल्क्येन योगश्च कथितो मे शुभप्रदः ।
पूर्णशान्तिप्रदो विप्र गाणेशो नात्र संशयः ॥ ५॥

एकाक्षरं गणेशस्य ददौ मन्त्रं सुसिद्धिदम् ।
मह्यं स कृपया योगिन् साधनं प्रजगाम ह ॥ ६॥

तथा मया महायोगिन् साधितं ज्ञानमुत्तमम् ।
गणेशकृपयाऽहं तु योगी जातो गुरुर्यथा ॥ ७॥

अतोऽहं गणनाथश्च न भिन्नौ मुनिसत्तम ।
गणेशस्य कृपा कुत्र वर्तते भेददायिनी ॥ ८॥

मया यच्चिन्तितं तत्तत् कथं ददाति विघ्नपः ।
अयोगिनामिदं सर्वं भ्रान्तिदं भवतीत्यहो ॥ ९॥

पञ्चधा चित्तवृत्तिश्च तासां प्रकाशकारकः ।
चिन्तामणिः स्वयं साक्षात् खेलति हृदि संस्थितः ॥ १०॥

जनकः कुत्र योगीन्द्र वर्तते वद साम्प्रतम् ।
तस्योपरि गणेशस्य कृपादिकमिदं मुने ॥ ११॥

अहं हर्ता अहं कर्ताऽहं पाता च मदात्मनाम् ।
भ्रान्तवद्भाषणं योग्यं नैव ते योगिसत्तम ॥ १२॥

जनकस्य वचः श्रुत्वा नारदः क्रोधसंयुतः ।
उवाच तं महाभागं निर्भर्त्स्य जनकं पुनः ॥ १३॥

नारद उवाच ।
ज्ञानमत्तोऽसि राजेन्द्र नश्वरस्त्वं कथं भवेः ।
गणेशाकाररूपश्च देहवान् भ्रमधारकः ॥ १४॥

ब्रह्मणस्पतिनामा वै गणेशो वेदवादतः ।

शरीरे तस्य सा सत्ता वर्तते पूर्णभावतः ॥ १५॥

योगिदेहेन सा सत्ता कदापि नृप वर्तते ।
समाधिना च योगीन्द्रो गणेशः कथितो बुधैः ॥ १६॥

प्रारब्धदेहधारित्वान्नरो योगी न संशयः ।
नरतुल्या शरीरेस्य भवेत् सत्ता हि सर्वदा ॥ १७॥

गर्विष्ठो योगमाहात्म्याज्जनक त्वां विशेषतः ।
भविता गर्वभङ्गस्ते गजाननप्रसादतः ॥ १८॥

एवमुक्त्वा नृपं योगी कैलासे गणपं ययौ ।
तं प्रणम्य विनीतः स वृत्तान्तं प्रजगाद ह ॥ १९॥

पुनः प्रणम्य विघ्नेशं ययौ स्वेच्छाचरो मुनिः ।
नारदो गणनाथस्य गानासक्तो महामतिः ॥ २०॥

ततो गजाननो भूपं वृद्धब्राह्मणरूपधृक् ।
आययौ जनकं कुष्ठी कृमिभाराकुलः पतन् ॥ २१॥

कम्पेन संयुतः सोऽपि दुर्गन्धेन समावृतः ।
पूयशोणितघर्मौघैर्व्याप्तश्च मक्षिकावृतः ॥ २२॥

द्वारपालेन राज्ञश्चाज्ञया तत्र प्रवेशितः ।
ययाचे तं नृपं विप्रो भोजनं तोषकारकम् ॥ २३॥

राज्ञा सम्पूजितो विप्रो बुभुजेऽन्नं समागतम् ।
अन्नं पुनर्ययाचे तं पुष्कलं प्रददौ नृपः ॥ २४॥

तदेव तेन सम्भुक्तं पुना राजा भयाकुलः ।
अयुतानां समं तस्मै ददावन्नं सुतुष्टिदम् ॥ २५॥

(Page खं. ५ अ. २९ पान ६४)
भक्षयित्वा तदपि स ययाचेऽन्नं महामुनिः ।
ततोऽपक्वं ददौ तस्मै तद् बभक्ष द्विजोत्तमः ॥ २६॥

ततो राजा पुरे संस्थं भूमिस्थं प्रददौ पुनः ।
अन्नं बभक्ष तत् सोऽपि ययाचे तं धरापतिम् ॥ २७॥

पुरप्रान्ते स्थिता ग्रामास्तेभ्यो राज्ञा समाहृतम् ।
अन्नं दत्तं च विप्रेण भक्षितं सकलं प्रभो ॥ २८॥

ययाचे स नृपं विप्रो देह्यन्नं राजसत्तम ।
राज्ञा लज्जासमायुक्तो न किञ्चित्तमुवाच ह ॥ २९॥

राजानं मुनिवर्यश्च जगाद प्रहसन्निव ।
त्वं गणेशो न सन्देहः कथं सत्ताविवर्जितः ॥ ३०॥

अकर्तुं कर्तुमद्यैवान्यथा कर्तुं गजाननः ।
समर्थस्त्वं कथं राजंस्तूष्णीं तिष्ठसि तद् वद ॥ ३१॥

भ्रान्तो योगमदेनासि राजेन्द्रात्र न संशयः ।
प्रत्यक्षं नरतुल्योऽसि न गणेशो मतः कदा ॥ ३२॥

एवमुक्त्वा गणेशानो ब्राह्मणस्य स्वरूपधृक् ।
बहिर्निःसृत्य लोकान् स ययाचेऽन्नं क्षुधातुरः ॥ ३३॥

लोकाः सर्वे समूचुस्तं सर्वेषां गृहगं मुने ।
राज्ञा समाहृतं चान्नं त्वया सर्वं प्रभक्षितम् ॥ ३४॥

नास्मद्गेहेऽधुना किञ्चिदन्नं त्वं गच्छ वाडव ।
सर्वभक्षः कुतो यातः कोऽसि न ज्ञायते जनैः ॥ ३५॥

श्रुत्वा सोऽपि हसन् विप्रो बभ्राम यत्र तत्र तु ।
पुरप्रान्ते गतो दैवाद् ददर्शद् वाडवालयम् ॥ ३६॥

त्रिशिरा मुनिवर्यश्चायाचिता वृत्तिधारकः ।
गाणपत्याग्रणीः पत्न्या स विरोचनया युतः ॥ ३७॥

तं ददर्श गणेशानः प्रविवेश तदाश्रमम् ।
सर्वापकारसंयुक्तं धातुधान्यादिवर्जितम् ॥ ३८॥

ययाचे तं महाभागमन्नं तृप्तिकरं मुने ।
दीयतां मे क्षुधार्ताय गाणपत्यस्वरूपधृक् ॥ ३९॥

जगाद त्रिशिरास्तत्र ब्राह्मणं वाक्यमुत्तमम् ।
मद्गृहे नैव विप्रेन्द्र धान्यं किञ्चित् प्रवर्तते ॥ ४०॥

दरिद्राणां महाराजोऽहमेको नात्र संशयः ।
मत्समो मानवो युक्तो दारिद्र्येण न तिष्ठति ॥ ४१॥

दूर्वाङ्कुराः समानीता गणेशपूजनाय च ।

तेष्वेको विद्यते विप्र नान्यत् किञ्चिद् विचारय ॥ ४२॥

तस्य तद् वचनं श्रुत्वा जगाद क्षुधितो द्विजः ।
भक्त्या देहि महाभाग दूर्वाङ्कुरं क्षुधापहम् ॥ ४३॥

ततो विरोचना विप्रं ददौ नत्वा गजाननम् ।
ध्यात्वा दूर्वाङ्कुरं तस्मै नानान्नं कल्प्य तत्र सा ॥ ४४॥

भक्त्या दत्तं तया विप्रो बभक्ष प्रीतिसंयुतः ।
तेन दूर्वाङ्कुरेणैव सन्तृप्तोऽभून् महामते ॥ ४५॥

भक्त्या तुष्टो ददौ विप्रं दर्शनं गणनायकः ।
गजवक्रादिचिह्नैश्च युतं रूपं परात्परम् ॥ ४६ ॥

दृष्ट्वा लम्बोदरं तौ तु प्रणेमतुः पुनः पुनः ।
तं साश्रुनयनौ पूज्य तुष्टुवतुः कृताञ्जली ॥ ४७॥

विरोचनात्रिशिरसावूचतुः ।
गणेशाय नमस्तुभ्यं नमः सर्वप्रियङ्कर ।
ब्रह्मणे ब्रह्मनाथाय विघ्नेशाय नमो नमः ॥ ४८॥

हेरम्बाय परेशाय मूषकध्वजिने नमः ।
आत्मनेऽनात्मने तुभ्यं नमो लम्बोदराय वै ॥ ४९॥

अनामय ह्यनाधार सर्वाधार सुमूर्तये ।
(Page खं. ५ अ. २९ पान ६५)
वक्रतुण्डाय सर्वेषां नमः पूज्याय ते नमः ॥ ५०॥

आदिमध्यान्तहीनाय तदाकाराय ढुण्ढये ।
ज्येष्ठराजाय सर्वेषां मात्रे पित्रे नमो नमः ॥ ५१॥

सर्वादिशूर्पकर्णाय पूर्णाय धरणीधर ।
शेषनाभिविभूषाय नमश्चिन्तामणे नमः ॥ ५२॥

सिद्धिबुद्धिप्रदात्रे ते स्वानन्दे वासकारिणे ।
भक्तेभ्यः शान्तिदात्रे वै शान्तिस्थाय नमो नमः ॥ ५३॥

सिद्धिबुद्धिवरायैव नमो मूषकवाहन ।
गजाननाय ज्येष्ठेभ्यः पदज्येष्ठप्रदायिने ॥ ५४॥

धन्यौ माता पिता नाथ कुलशीलादिकं च मे ।

येन दृष्टो गणाधीशो वेदान्तागोचरो विभुः ॥ ५५॥

वेदा विदुर्नो न च योगिनोऽयं ब्रह्मादयो वेदविदः शिवादयः ।
शान्त्या प्रलभ्यं गणनाथमेवं पश्यावहे चित्रमिदं न संशयः ॥ ५६॥

परात्परस्त्वं परमप्रमेयः कथं महात्मन् सदने गतो मम ।
न मत्समो ह्यण्डकटाहमध्ये गणेश ते पादसमीपगादहो ॥ ५७॥

एवं संस्तुवतस्तस्य सस्त्रीकस्य महामुने ।
अत्यन्तभक्तिमाहात्म्यात् कण्ठरोधः समाभवत् ॥ ५८॥

ननर्त परमानन्दयुक्तस्तत्र प्रजापते ।
सरोमाञ्चो न सस्मार यथा भ्रान्तश्च साश्रुकः ॥ ५९॥

ततस्तं गणनाथो वै जगाद वचनं हितम् ।
स्वयं साश्रुः सरोमाञ्चो भक्तिं दृष्ट्वा महामुने ॥ ६०॥

श्रीगणेश उवाच ।
भवत्कृतमिदं स्तोत्रं मम प्रीतिकरं बहु ।
भविष्यति जनानां वै मुने मद्भक्तिवर्धनम् ॥ ६१॥

यः पठिष्यति यो मर्त्यः श्रोष्यते सर्वमालभेत् ।
भुक्तिं मुक्तिं ब्रह्मभूयं सर्वदा मत्प्रियो भवेत् ॥ ६२॥

वरान् वृणु महायोगिंस्त्रिशिरो मनसीप्सितान् ।
सर्वं दास्यामि भक्त्या ते तोषितोऽहं न संशयः ॥ ६३॥

गणेशवचनं श्रुत्वा सस्त्रीकस्त्रिशिराः पुनः ।
उवाच तं प्रणम्यादौ भक्त्या नम्रो महामुनिः ॥ ६४॥

त्रिशिरा उवाच ।
मां मोहयसि किं नाथ न वृणोमि गजानन ।
सर्वं भ्रान्तिप्रदं मत्वा भक्तिं याचे त्वयि स्थिराम् ॥ ६५॥

श्रुत्वा जगाद तं विघ्नराजोऽसौ विस्मितोऽभवत् ।
अहो यः सुदृढां भक्तिमेकां वृणोति वाडवः ॥ ६६॥

श्रीगणेश उवाच ।
पूर्णां भक्तिं महायोगिन् लभसे नात्र संशयः ।
मदीयां ते वशे नित्यं भविष्यामि तया किल ॥ ६७॥

एवमुक्त्वांऽतर्दधेऽसौ गणेशो ब्रह्मनायकः ।
सस्त्रीकस्त्रिशिरास्तत्र खेदयुक्तो बभूव ह ॥ ६८॥

गणेशकृपया तत्र गृहं तस्य महामुनेः ।
शुशुभे रत्नसंयुक्तं सुवर्णभित्तिराजितम् ॥ ६९॥

द्वारि नाना जनास्तत्र सुवर्णयष्टिधारकाः ।
स्थितास्तथा स्त्रियो दासाः सेवां कर्तुं सुलालसाः ॥ ७०॥

नानासम्पत्तिसंयुक्तं दृष्ट्वाऽसौ विस्मितोऽभवत् ।
तावद्दासाश्च तं गृह्य सेवां चक्रुः सुभाविकाः ॥ ७१॥

तद् दृष्ट्वा परमाश्चर्यं मुनिः पत्नीं समब्रवीत् ।
माया भक्तिप्रणाशार्थं दत्ता विघ्नेश्वरेण च ॥ ७२॥

अतो यत्नसमायुक्ता भुङ्क्ष्व भोगान् महासति ।
एवं मदविहीनौ तौ परं बुभुजतुः सुखम् ॥ ७३॥

(Page खं. ५ अ. ३० पान ६६)
दानमार्गेण स ददौ द्रव्यं नानाविधं विधे ।
तथापि तादृशं तत्र रेजे सोऽपि सुविस्मितः ॥ ७४॥

एतत्ते कथितं किञ्चित् दूर्वामाहात्म्यमुत्कटम् ।
गणेशतोषकं पूर्णं सर्वसिद्धिप्रदायकम् ॥ ७५॥

गणेशरोमकूपेषु ब्रह्माण्डानि ह्यनेकशः ।
ब्रह्म नानाविधं देहे स्थितं तस्य प्रजापते ॥ ७६॥

तत्सर्वं तृप्तिमायाति तृप्ते विघ्नेश्वरे परे ।
फलं तस्य च लोके को वर्णयेद्वद मानद ॥ ७७॥

त्रैलोक्यादिकमेतस्मान्न तुल्यं दूर्वया भवेत् ।
अपारपुण्यदा प्रोक्ता गणेशे तोषकारिणी ॥ ७८॥

दूर्वाया महिमा दक्ष कथितो ब्रह्मदायकः ।
भुक्तिमुक्तिप्रदः पूर्णः पठते शृण्वते भवेत् ॥ ७९॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पञ्चमे खण्डे लम्बोदरचरिते त्रिशिरसश्चरितवर्णनं नाम एकोनत्रिंशत्तमोऽध्यायः ॥ ५.२९

## ५.३० दूर्वामाहात्म्यवर्णनं नाम त्रिंशत्तमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

दक्ष उवाच ।
श्रुतं दूर्वार्पणस्याऽपि माहात्म्यं सर्वसिद्धिदम् ।
न दूर्वया समं किञ्चिद् दृश्यते भुवनेषु वै ॥ १॥

तथापि तृप्तिं नो यामि योगामृतपरायणः ।
अतो मे वद योगीन्द्र जनकस्य कथानकम् ॥ २॥

गणेशेन महायोगी जनकश्छलितोऽभवत् ।
किं चकार ततः सोऽपि गते विघ्नेश्वरे वद ॥ ३॥

मुद्गल उवाच ।
शृणु प्रजापते चित्रं चरित्रं जनकस्य च ।
गते गणेश्वरे सोऽपि दुःखयुक्तो बभूव ह ॥ ४॥

शुशोच हृदि सङ्क्षुब्धो जगाद स्वस्य चेतसि ।
अहो नारदविप्रेण कथितं सत्यमेव तत् ॥ ५॥

देहो भक्तिकरः प्रोक्तो न भजेद्यस्तमाप्य सः ।
गजाननं नरो नित्यं वञ्चितो मायया परम् ॥ ६॥

कर्मनिष्ठैर्गणेशानः सेव्यः स्वहितकारणात् ।
तपःफलप्रदः सेव्यः तपोनिष्ठैस्तथाऽपि सः ॥ ७॥

ज्ञाननिष्ठैः सदा सेव्यो ज्ञानसिद्धिप्रदायकः ।
योगिभिर्योगदाता स सेव्यो ब्रह्ममयः प्रभुः ॥ ८॥

अहो देहधरः साक्षाद्ब्रह्मणस्पतिवाचकः ।
वेदेषु कथितश्चायं गणेशो नात्र संशयः ॥ ९॥

सन्त्यज्य मूर्खवद्भ्रान्तोऽहं गणेशं प्रभावतः ।
योगस्य चावदं मिथ्या नरतुल्यस्वभाववान् ॥ १०॥

गणेशभजनं मुख्यं धृतं येन महात्मना ।
स योगीन्द्रगुरुः साक्षात्तत्समं नैव विद्यते ॥ ११॥

एवं क्षोभसमायुक्तो जनकः स्वगृहे स्थितः ।

समाययुश्च योगीन्द्रास्तं नवर्षभनन्दनाः ॥ १२॥

नग्नाः सर्वत्र पूज्याश्च सदा यौवनधारकाः ।
अव्याहतास्त्रिलोकेषु भ्रमन्तः स्वेच्छयाचराः ॥ १३॥

सर्ववन्द्याः सदा दक्ष ब्रह्मभूयपरायणाः ।
(Page खं. ५ अ. ३० पान ६७)
विधिनिषेधहीनाश्च योगरूपधरा इव ॥ १४॥

गणेशस्य चरित्राणि कथयन्तः परस्परम् ।
तद्रूपास्तस्य नामानि वदन्तो हर्षसंयुताः ॥ १५॥

स्वपरभ्रान्तिशून्याश्च समलोष्टाश्मकाञ्चनाः ।
भेदाभेदविहीना वै वर्णाश्रमविवर्जिताः ॥ १६॥

स्वेच्छया कर्म कर्तारः स्वेच्छया ज्ञानधारकाः ।
स्वेच्छया समशीला वै स्वेच्छया सहजप्रियाः ॥ १७॥

स्वेच्छया स्वस्वरूपस्था स्वेच्छया योगतत्पराः ।
स्वेच्छया पूर्णयोगस्था वर्णवन्तश्च स्वेच्छया ॥ १८॥

स्वेच्छयाऽऽश्रमसंयुक्ताः स्वेच्छया विधिधारकाः ।
निषेधे स्वेच्छया युक्ताः स्वाधीनास्ते च योगिनः ॥ १९॥

विधिनिषेधहीनाश्च स्वेच्छया वै विनायकाः ।
दण्डादिभिर्विहीनास्ते गणेशगानतत्पराः ॥ २०॥

तान् दृष्ट्वा जनको राजा सम्भ्रमाकुलचेतसा ।
समुत्थाय ननामाऽऽदौ दण्डवत् पृथिवीतले ॥ २१॥

उत्थाय तान् प्रपूज्याऽथ भोजयामास चान्धसा ।
पादसंवाहने संस्थो जगाद वचनं हितम् ॥ २२॥

जनक उवाच ।
धन्यौ मे पितरौ विद्या तपःस्वाध्यायकादयः ।
ब्रह्मणस्पतिरूपाणां भवतां दर्शनात् किल ॥ २३॥

निःस्पृहाः सर्वभावेषु भवन्तो नात्र संशयः ।
तथापि भवदाज्ञां वै कर्तुमीहे च योगिनः ॥ २४॥

भवतां किञ्चिदाज्ञायां संस्थितो यदि मानवः ।

सकृत्तस्य पुनर्जन्म विद्यते नैव भक्तिभाक् ॥ २५॥

अवमानेन सद्यो वै नारकी जायते नरः ।
साक्षाद्योगस्वरूपाश्च भवन्तः कृपयाऽऽगताः ॥ २६॥

न मत्समस्त्रिलोकेषु भवतां दर्शनाद्भवेत् ।
अधुना कृतकृत्योऽस्मि जातोऽहं भाग्यगौरवात् ॥ २७॥

मुद्गल उवाच ।
जनकस्य वचः श्रुत्वा साधु तं ते प्रजापते ।
जगुः प्रहृष्टभावेन राजानं शान्तिदायकाः ॥ २८॥

नवयोगिन ऊचुः ।
धन्यस्त्वं मानवो राजा विदेहोऽसि न संशयः ।
साधुत्वे देहसंस्थोऽपि त्वयि चित्रं न सम्भवेत् ॥ २९॥

साधुदर्शनकामाश्च वयं ते गृहमागताः ।
दृष्ट्वा त्वां योगिनं पूर्णं तृप्ताः स्मः श्रुतकीर्तयः ॥ ३०॥

गच्छामो राजशार्दूल नेच्छामः किञ्चिदप्यहो ।
पूजां त्वया कृतां दृष्ट्वा सन्तुष्टाः स्मो महामते ॥ ३१॥

तेषां तद्वचनं श्रुत्वा तान् जगाद नृपः पुनः ।
प्रणम्य भक्तिसंयुक्तो हितं सर्वजनप्रियः ॥ ३२॥

जनक उवाच ।
वदेत योगसंसिध्यै किं कर्तव्यं जनैः सदा ।
येन योगीन्द्र वन्द्यास्ते भवन्ति मानवा बुधाः ॥ ३३॥

कविरुवाच ।
स्वधर्मपालको नित्यं भवेद्योगपरायणः ।
रजस्तमस्तिरस्कृत्य सत्त्वयुक्तो मुमुक्षुकः ॥ ३४॥

गणेशार्पणबुद्ध्या वै कर्माणि सततं नरः ।
कुर्याच्छ्रौतानि स्मार्तानि व्रतादीनि विशेषतः ॥ ३५॥

आन्तराणि महाराज वायुसाधनकानि वै ।
स्मृतानि तानि सर्वाणि कुर्यात् ध्यानपरायणः ॥ ३६॥

गणेशस्य सदा ध्यानं कुर्यात् स्वहृदि भूमिप ।

एकाक्षरादिमन्त्राश्च तेष्वैकजपकारकः ॥ ३७॥

सम्प्रज्ञातसमाधिस्थः सम्भवेद्यदि मानवः ।
तथापि गणराजस्य ध्यानं नैव परित्यजेत् ॥ ३८॥

असम्प्रज्ञातयोगस्थः भवेद्यदि स मानवः ।
तथापि विघ्नराजस्य सदा ध्यानं समाचरेत् ॥ ३९॥

गणेशध्यानसंयुक्तो योगभूमिं नृपात्मज ।
स च स्वल्पेन कालेनोल्लङ्घयेद्विघ्नहानतः ॥ ४०॥

ततो योगी भवेन्नूनं शान्तियोगपरायणः ।
चित्ते चिन्तामणौ सोऽपि तदाकारः सुसाधनात् ॥ ४१॥

न गणेशसमं किञ्चिज्जगत्सु ब्रह्मदं भवेत् ।
सर्वेभ्यो योगदानार्थं बभूवे देहधारकः ॥ ४२॥

एतत्ते कथितं भूप योगप्राप्तौ सुसिद्धिदम् ।
भजनं सिद्धिनाथस्य योगसिद्धिप्रदायकम् ॥ ४३॥

जनक उवाच ।
कथं चिन्तामणिः प्रोक्तो गणेशानो वदन्तु मे ।
तस्य रूपं कथं ज्ञेयं नरैश्चित्ते विशेषतः ॥ ४४॥

हरिरुवाच ।
चित्तं पञ्चविधं प्रोक्तं तत्र चिन्तामणिः स्थितः ।
चित्तप्रकाशकत्वाद्वै विघ्नेशानः प्रकथ्यते ॥ ४५॥

क्षिप्तं मूढं च विक्षिप्तमेकाग्रं च निरोधकम् ।
पञ्चधा चित्तमेवं तु भवते शृणु भूमिप ॥ ४६॥

यत्र क्षिप्तं मनः सर्वैस्तत्र ज्ञानयुतं भवेत् ।
तदेव कर्तुमुद्युक्तं समर्थं सम्भवेत् कथम् ॥ ४७॥

क्षिप्तं चित्तं विजानीहि स्मृतस्तत्र प्रकाशकः ।
चिन्तामणिर्गणाधीशस्तं भजस्व महामते ॥ ४८॥

यत्र क्षिप्तं नरेणैव चित्तं तत्र न गच्छति ।
ज्ञानहीनतया तस्य मूढवन् मूढसंज्ञितम् ॥ ४९॥

अन्यच्च भ्रान्तियुक्तानां पिशाचवत् स्थितं सदा ।

चित्तं तदेव मूढं च ज्ञातव्यं जनवत्सल ॥ ५०॥

तत्र प्रकाशकर्ता स नानाखेलपरायणः ।
चिन्तामणिर्गणाध्यक्षः स तिष्ठति भजस्व तम् ॥ ५१॥

सत्वभावसमायुक्तो मानवो मोक्षकामुकः ।
ब्रह्मार्पणतया सर्वं कुरुते कर्म नित्यदा ॥ ५२॥

ब्रह्मानुभवहीनो न जगत्सु सुखलालसः ।
ब्रह्मार्थं तस्य चित्तं वै विक्षिप्तं कथितं बुधैः ॥ ५३॥

संसारे क्षिप्तभावश्च तस्माद्विगतक्षेपणम् ।
कर्तुं समुद्यतः सोऽपि सदा साधनतत्परः ॥ ५४॥

अनेन विधिना राजन् विक्षिप्तं चित्तमुच्यते ।
तत्र प्रकाशकर्तारं चिन्तामणिं भजस्व तम् ॥ ५५॥

ज्ञानदृष्टिः समुत्पन्ना हृदि सर्वत्र भूमिप ।
साक्षाद्भावस्यैक्यकरावयवादिकवर्जिता ॥ ५६॥

तया सोऽपि नरस्तत्र यत्र पश्यति योगवित् ।
आकाररहितं भाति विश्वं सर्वं न संशयः ॥ ५७॥

अष्टधा सा समाख्याता सम्प्रज्ञातस्वरूपिका ।
एकभावकरा वृत्तिरेकाग्रा कथिता बुधैः ॥ ५८॥

तत्र चिन्तामणिः साक्षात् प्रकाशकारकः स्मृतः ।
तं भजस्व विधानेन सर्वसिद्धिप्रदायकम् ॥ ५९॥

जगदवयवैर्युक्तं चतुर्देहमयं नृप ।
बिन्दुस्तस्य परा काष्ठा ब्रह्मकायाप्रधारकम् ॥ ६०॥

देही भेदविहीनश्च देहचालक उच्यते ।
सोऽहं मात्रात्मकः सोऽपि कथितो वेदवादिभिः ॥ ६१॥

तयोर्योगे निरोधश्च सदा भवति चेतसः ।
तस्य भेदौ समाख्यातौ संयोगायोगरूपिणौ ॥ ६२॥

स्वत उत्थानयुक्तं परत उत्थानधारकम् ।
स्वतः परत उत्थानवर्जितं ब्रह्म उच्यते ॥ ६३॥

एतत् संयोगकं प्रोक्तं समाधेर्धारकं परम् ।
सर्वेषां तत्र संयोगो ब्रह्माकारेण जायते ॥ ६४॥

(Page खं. ५ अ. ३० पान ६९)
अन्यदयोगरूपं वै निवृत्तेर्धारकं परम् ।
ब्रह्म मायाविहीनं तु व्यतिरेकप्रभावतः ॥ ६५॥

केषाञ्चित्तत्र संयोगो ब्रह्मणां जगतां भवेत् ।
नैव केषु च तस्यापि ब्रह्मायोगं प्रकथ्यते ॥ ६६॥

स्वकीयभेदनाशेन लभ्यते नात्र संशयः ।
तदेव ब्रह्मभूतत्वं निरोधवृत्तिजं मतम् ॥ ६७॥

निरोधे चित्तके राजन् प्रकाशदगणेश्वरम् ।
चिन्तामणिं भजस्व त्वं परं तत् खेललालसम् ॥ ६८॥

पञ्चधा चित्तभूमिस्थं त्यक्त्वा योगपरो भवेत् ।
स्वयं चिन्तामणिः साक्षाद्भवते चित्तनाशनात् ॥ ६९॥

शान्त्या सर्वत्र राजेन्द्र चित्तेषु नित्यमादरात् ।
चिन्तामणिः प्रलभ्येत त्यक्त्वा सद्यश्च चिन्तनम् ॥ ७०॥

एतत्ते कथितं पूर्णं चिन्तामणिस्वरूपकम् ।
तं भजस्व विधानेन शान्त्या योगपरायणः ॥ ७१॥

जनक उवाच ।
एतादृशो गणेशानः कथं देहधरोऽभवत् ।
तत्र श्रद्धादिकं नाथास्तादृशं जायते कथम् ॥ ७२॥

अन्तरिक्ष उवाच ।
वामभागे राजसश्च दक्षिणे तामसः स्मृतः ।
मध्ये सत्त्वमयः प्रोक्तस्तेषां योगे तुरीयकः ॥ ७३॥

चतुर्विधमयो देहस्तत्राहङ्कारधारकः ।
देही च तन्मयः साक्षात् कण्ठाधो गणनायकः ॥ ७४॥

यस्मात् सर्वं समुत्पन्नं यत्र गच्छति भूमिप ।
समाधिना महोग्रेण प्रलये तद्गजः स्मृतः ॥ ७५॥

कदा न जायते भूप लयं गच्छति नो कदा ।

तदेव गजशब्दाख्यं ब्रह्म वेदैः प्रकथ्यते ॥ ७६॥

तदेव मस्तकं तस्य गणेशस्य महात्मनः ।
तयोर्योगे गणाध्यक्षः साकारो भवतीत्यहो ॥ ७७॥

सम्प्रज्ञातमयो देहः कण्ठाधस्तस्य कीर्तितः ।
असम्प्रज्ञातरूपं च कण्ठादूर्ध्वं शिरः स्मृतम् ॥ ७८॥

तयोर्योगे स्वयं साक्षाद्भक्तानुग्रहकारणात् ।
देहधारी बभूवाऽपि गणेशो ब्रह्मनायकः ॥ ७९॥

न सर्वसमभावाख्यो देहस्तस्य महात्मनः ।
देहधारी गणाधीशो भक्तिभोगार्थमञ्जसा ॥ ८०॥

न भक्तेश्च समं तस्य प्रियं राजेन्द्र वर्तते ।
तदर्थं सकलं हित्वा भक्ताधीनो भवेत् स्वयम् ॥ ८१॥

मायया भ्रान्तचित्तानां देहधारी यथा नरः ।
तथाऽयं भवति प्राज्ञ साक्षाद्योगस्वरूपधृक् ॥ ८२॥

जनक उवाच ।
कीदृशी गणराजस्य माया भ्रान्तिकरी मता ।
तां मे वदत योगीन्द्रा ब्रह्मभूयार्थमञ्जसा ॥ ८३॥

प्रबुद्ध उवाच ।
वामाङ्गात् सिद्धिरुत्पन्ना वामभागप्रकाशिनी ।
दक्षिणाङ्गात्तथा बुद्धिर्दक्षिणाङ्गधरा बभौ ॥ ८४॥

सिद्धिपुत्रः स्वयं लक्षो बुद्धिपुत्रो महामते ।
लाभस्तयोश्च चित्तात्तौ सञ्जातौ खेलकौ परौ ॥ ८५॥

मायामोहितचित्तानां भ्रामकौ नात्र संशयः ।
तयो रूपं प्रवक्ष्यामि शृणु लोकहिताय च ॥ ८६॥

पापेषु च नरा राजन् यदा लक्षं प्रकुर्वते ।
तदा नरकदो लाभो भवते पापकारिणाम् ॥ ८७॥

यदा पुण्येषु लक्षं वै कुर्वते मानवा नृप ।
तदा स्वर्गप्रदो लाभो जायते पुण्यकर्मणाम् ॥ ८८॥

यदा ब्रह्मणि लक्षं वै कुर्वते मानवा नृप ।

तदा योगमयो लाभः सदा भवति योगिनाम् ॥ ८९॥

हृदि लक्षः स्थितो नित्यं सर्वत्र लक्षदायकः ।
पदार्थेषु स्थितो लाभो मतो नाना फलप्रदः ॥ ९०॥

ताभ्यां स युवराजाभ्यां विघ्नेशो मायया चरन् ।
बन्धहीनः खेलति च स्वेच्छाचारिस्वरूपधृक् ॥ ९१॥

तत्र भ्रान्तिकरी प्रोक्ता सिद्धिः सर्वत्र वर्तते ।
सिद्ध्यर्थं सर्वलोकाश्च बभ्रमुस्त्वं विचारय ॥ ९२॥

धर्मसिद्धिस्तथार्थस्य सिद्धिः कामप्रदायिनी ।
मोक्षसिद्धिस्तथा राजन् ब्रह्मभूयकरी मता ॥ ९३॥

अहं गणेशरूपश्चेत् कथमत्र प्रवर्तते ।
भुक्तिमुक्तिब्रह्मभूयं सिद्धिः सुभ्रान्तिदा मता ॥ ९४॥

भ्रान्तिधारकरूपा सा बुद्धिः सर्वत्र वर्तते ।
बुध्या बुद्धा तु राजेन्द्र पश्चान् मोहो निवर्तते ॥ ९५॥

पञ्चचित्तमयी बुद्धिः स्वयं विश्वात्मिका मता ।
ब्रह्माकारा तथा भिन्नं पदमिच्छति दुःखदम् ॥ ९६॥

सकामा चैव निष्कामा ब्रह्मभूयपरायणा ।
बुद्धिर्भवति सा भ्रान्त्या भ्रान्तिधारकतां गता ॥ ९७॥

नानाभ्रान्तियुतं सर्वं चकार सिद्धिमञ्जसा ।
नानामोहयुतं तद्वद् बुद्धिश्चकार खेलया ॥ ९८॥

ताभ्यां सम्मोहितं सर्वं लक्षलाभयुतं भवेत् ।
नानालक्षसमायुक्तं नानालाभफलैर्युतम् ॥ ९९॥

अतो मायायुतः सोऽपि गणेशो ब्रह्मनायकः ।
बिम्बे खेलति बिम्बीव जानीहि नृपसत्तम ॥ १००॥

एतन् मायास्वरूपं ते कथितं मोहकारकम् ।
यज्ज्ञात्वा योगिवन्द्यश्च जायते मानवः क्षणात् ॥ १०१॥

जनक उवाच ।
भक्तिप्रियो गणेशश्चेत् कथं मोहयुतान् जनान् ।
स्वभक्तान्न स योगीन्द्राः करोति वदत प्रियाः ॥ १०२॥

न पराधीनता तस्य स्वप्रियं गणनायकः ।
पराधीनसमानं न न करोति महाद्भुतम् ॥ १०३॥

पिप्पलायन उवाच ।
गणेशेन महाराज क्रीडार्थं रचितं जगत् ।
मायामयं विशेषेण नानाखेलयुतं तथा ॥ १०४॥

तत्रादौ द्विविधं तेन तदर्थं रचितं पुरा ।
तच्छ्रुणुष्व विधानेन सर्वसंशयहारकम् ॥ १०५॥

स्वस्वस्वार्थयुतं पूर्णं मायासुखकरं मतम् ।
तदर्थं सर्वलोकाश्च ब्रह्माणि सम्भ्रमन्ति वै ॥ १०६॥

योगमार्गस्तथा राजन् गाणेशः शान्तिदः परः ।
रचितो मोहनाशार्थं मायानाशकरो मतः ॥ १०७॥

योगेन गणपं ज्ञात्वा नरः पूर्णं ततो नृप ।
भजतेऽनन्यभावेन तन्निष्ठस्तत्परायणः ॥ १०८॥

यस्य भावो भवेद्यत्र यादृशस्तादृशं चरेत् ।
तत्र विघ्नेश्वरः साक्षादाग्रहं न करोति च ॥ १०९॥

यदा गणेश्वरो विश्वं भक्तियुक्तं निरन्तरम् ।
करोति चेद्गणेशस्य तदा खेलः कुतो भवेत् ॥ ११०॥

न पराधीनता तस्य क्रीडार्थं गणनायकः ।
विश्वं तु द्विविधं कृत्वा परां पश्यति भावनाम् ॥ १११॥

एतत्ते कथितं राजन् श्रोतुमिच्छसि किं परम् ।
स्वाधीनं तु पराधीनं मायया दृश्यते सदा ॥ ११२॥

जनक उवाच ।
किं कर्म किमकर्मापि विकर्मापि कथं भवेत् ।
कर्मयोगश्च विप्रेन्द्राः कीदृशो वदत प्रियाः ॥ ११३॥

आविर्होत्र उवाच ।
स्वस्वधर्मयुतं कर्म विधियुक्तं महामते ।
(Page खं. ५ अ. ३० पान ७१)

देहसौख्यप्रदं प्रोक्तं जन्ममृत्युप्रदं भवेत् ॥ ११४॥

स्वस्वधर्मविहीनं यद्विधिहीनं विशेषतः ।
विकर्म विद्धि राजेन्द्र तदेवं पापरूपकम् ॥ ११५॥

पापाचरणमात्रेण नरो दुर्गतिमाप्नुयात् ।
देहदुःखकरं प्रोक्तं परिणामे न संशयः ॥ ११६॥

सत्कर्म मुक्तिकामार्थं कुरुते नित्यमादरात् ।
ब्रह्मार्पणस्वभावेनाकर्म विद्धि महामते ॥ ११७॥

शुक्लगत्या नरो वेदे मुक्तिं प्राप्नोति शाश्वतीम् ।
अकर्मणः प्रभावेण स निष्कामपरो मतः ॥ ११८॥

कर्मयोगमयं विश्वं सर्वं जानीहि पार्थिव ।
क्रियायां यत् स्थितं ब्रह्म स एव कर्मयोगकः ॥ ११९॥

क्रियमाणं च यत्प्रोक्तं तदेव कर्म उच्यते ।
तस्य भेदान् प्रवक्ष्यामि समाहितमनाः शृणु ॥ १२०॥

मौनं यदि धृतं तेन तदा जातं नृपात्मज ।
अतः कर्ममयं विद्धि धारणान्नात्र संशयः ॥ १२१॥

वायुबन्धनयोगेन प्राणो नीतः स्वमस्तके ।
तदेव कर्मरूपं वै वायुचालनतः परम् ॥ १२२॥

ध्यानं करोति चेच्चित्ते दमयित्वा मनः स्वयम् ।
तदेवं कर्मरूपं तु मनोनिग्रहकारणात् ॥ १२३॥

जागृतिर्जागरं कर्म स्वप्नः सुप्तिमयं भवेत् ।
अज्ञानं विद्धि सौषुप्तं कर्मरूपं न संशयः ॥ १२४॥

इत्याद्या बहवो भेदा मया वक्तुं न शक्यते ।
नामरूपधरः कोऽपि कर्महीनो न वर्तते ॥ १२५॥

उत्पत्तिश्च स्थिती राजन् संहारस्त्रिविधं परम् ।
सर्वं कर्ममयं विद्धि कर्मयोगेन जायते ॥ १२६॥

असद्ब्रह्म च यत् प्रोक्तं वेदे तन्मायया बभौ ।
कर्मरूपं न सन्देहो नामरूपप्रधारणात् ॥ १२७॥

नामरूपपरित्यागे ह्यसत् स्वानन्दगं भवेत् ।
मानवो ब्रह्मरूपः स कर्मयोगी प्रकथ्यते ॥ १२८॥

एतत् कर्मस्वरूपं ते कथितं ब्रह्मवाचकम् ।
कर्माधीनं जगत् सर्वं ब्रह्म नानाविधं तथा ॥ १२९॥

जनक उवाच ।
ज्ञानं च कीदृशं प्रोक्तं तन्मे वदत योगिनः ।
येन योगी भवेज्जन्तुर्ज्ञानयोगपरायणः ॥ १३०॥

द्रुमिल उवाच ।
हृदि स्फूर्तिमयं ज्ञानं ज्ञातव्यं विबुधैः सदा ।
स्फूर्तिदातृस्वरूपेण ब्रह्म तत्र स्थितं भवेत् ॥ १३१॥

नामरूपविहीनं यत् सदाऽमृतमयं भवेत् ।
आद्यन्तभावहीनं वै तद्विद्धि ज्ञानमुत्तमम् ॥ १३२॥

ज्ञानचक्षुः स्वभावेन ब्रह्मानुभवकारकम् ।
नानाज्ञानलयं कृत्वा ज्ञानयोगी भवेत्ततः ॥ १३३॥

सत्यस्वानन्दरूपं त्वं जानीहि ज्ञानमूलकम् ।
ज्ञानानां योगभावेन लभ्यते योगसेवया ॥ १३४॥

जनक उवाच ।
आनन्दः कीदृशः प्रोक्तः सहजं कीदृशं मतम् ।
ब्रह्मभूयं च योगीन्द्राः कीदृशं कथयन्तु मे ॥ १३५॥

चमस उवाच ।
बाह्यान्तरविभेदेनानन्दः सर्वत्र वर्तते ।
उभयात्मकभावस्थः समरूपधरो मतः ॥ १३६॥

नानाद्वन्द्वेषु राजेन्द्र स्थितमानन्दरूपकम् ।
समं विद्धि च सर्वत्र जगत्सु ब्रह्मसु परम् ॥ १३७॥

सत्यासत्यमयं तद्धि समस्वानन्दगं परम् ।
ब्रह्म राजन् सदानन्दरूपं तदेव सम्मतम् ॥ १३८॥

द्वन्द्वेषु त्वासमन्ताद्यन्नन्दनात्तन् महीपते ।
आनन्दः परमानन्दो ब्रह्मानन्दः प्रकथ्यते ॥ १३९॥

समभावस्थितानां च योगेन ब्रह्म लभ्यते ।
(Page खं. ५ अ. ३० पान ७२)
आनन्दाख्यं प्रजानाथ योगसाधनतः परम् ॥ १४० ॥

एतत्ते कथितं पूर्णमानन्दस्य स्वरूपकम् ।
आनन्दानां समायोगे समस्वानन्दगो भवेत् ॥ १४१ ॥

द्विविधा तस्य माया तु द्वन्द्वभावधरा मता ।
तयोः संयोगभावे स उभयात्मक उच्यते ॥ १४२ ॥

तदेव द्विविधेष्वेव मोहयुक्तं नराधिप ।
समं सर्वत्र जानीहि द्वन्द्वमोहादिदायकम् ॥ १४३ ॥

त्रिषु मोहविहीनं यत् सदा नेति स्वरूपकम् ।
स्वाधीनं सहजं विद्धि चतुर्थं राजसत्तम ॥ १४४ ॥

स्वेच्छया सत् समायुक्तं स्वेच्छया सत् परायणम् ।
स्वेच्छयाऽऽनन्दसंयुक्तं त्रिभिर्हीनं निजेच्छया ॥ १४५ ॥

आज्ञया त्रिविधं ब्रह्म वर्तते नात्र संशयः ।
सर्वेषां नाशकं तुर्यं सहजं नेति भावतः ॥ १४६ ॥

न तस्य नेति कर्ता वै विद्यते योगभावतः ।
तेन नेतिमयं स्वच्छन्दगं प्रोक्तं सनातनम् ॥ १४७ ॥

स्वेच्छया बन्धयुक्तश्च स्वेच्छया बन्धवर्जितः ।
स्वेच्छया समभावस्थो भवते सहजाख्यकः ॥ १४८ ॥

अव्यक्तेन त्रिभावेषु तेन योगेन लभ्यते ।
सहजं ब्रह्म वेदेषु यत् प्रोक्तं वेदवादिभिः ॥ १४९ ॥

स्वाधीनानां समायोगे व्यक्तः स्वानन्द उच्यते ।
अव्यक्तयोगभावत्वान्निराकर्तुं न शक्यते ॥ १५० ॥

एतत्ते कथितं भूप सहजं मोहवर्जितम् ।
अधुना शृणु योगं त्वं ब्रह्मभूयप्रकाशकम् ॥ १५१ ॥

स्वानन्दः सर्वसंयोगे भवति ब्रह्मधारकः ।
चतुर्णां तत्र संयोगः कर्तव्यः स्वसमाधिना ॥ १५२ ॥

त्रिविधं मोहयुक्तं च मोहहीनं चतुर्थकम् ।

नैव ब्रह्मणि राजेन्द्र मोहयुक्तविहीन ते ॥ १५३॥

स्वाधीनं न भवेत्तत्तु पराधीनं न वर्तते ।
ब्रह्मणां जगतां तत्र संयोगो जायते परः ॥ १५४॥

स्वसंवेद्यमयो भूत्वा यस्तु तिष्ठति मानवः ।
तत्र किं भिन्नभावाख्यं वर्तते योगनाशकम् ॥ १५५॥

संयोगे नाशभूते तु ब्रह्मायोगः प्रकीर्तितः ।
न तत्र जगतां भूप संयोगो ब्रह्मणां भवेत् ॥ १५६॥

अयोगस्य न संयोगः केषु ब्रह्मसु कीर्तितः ।
योगिभिर्योगप्राप्त्यर्थं व्यतिरेकाद्विचारय ॥ १५७॥

संयोगे मायया युक्तो भवते गणनायकः ।
मायाधीनस्वरूपेण सदाऽयोगः प्रवर्तते ॥ १५८॥

मायया सर्वभावस्थो भवति द्विरदाननः ।
संयोगाभेदभावेन निजमायामयः स्मृतः ॥ १५९॥

स्वानन्दे गणनाथस्य दर्शनं योगिनां भवेत् ।
संयोगाभेदकं तेन विदुः स्वानन्दवासिनम् ॥ १६०॥

अयोगे माययाहीनो गणेशः सर्वदा मतः ।
यादृशस्तादृशः सोऽपि नागतो न गतो भवेत् ॥ १६१॥

वृथा भ्रान्तिमयं सर्वं भासते मायया किल ।
भ्रान्तानां तेन सर्वत्र निवृत्तिर्जायते परा ॥ १६२॥

स्वकीया भेदभावाच्च निवृत्तिं व्यतिरेकतः ।
धृत्वा ह्ययोगयोगस्थः स्वयं भवति मानवः ॥ १६३॥

अयोगे मायया हीनः संयोगे मायया युतः ।
नरो भवति राजेन्द्र पञ्चपञ्चस्वरूपया ॥ १६४॥

ब्रह्मणि ब्रह्मभूतस्य संयोगः कुत्र वर्तते ।
(Page खं. ५ अ. ३० पान ७३)
अयोगश्च महीपाल नान्वयव्यतिरेकतः ॥ १६५॥

चित्तं पञ्चविधं त्यक्त्वा चित्तभ्रान्तिं च पञ्चधा ।
स्वयं चिन्तामणिः साक्षाद् ब्रह्मभूतो नरो भवेत् ॥ १६६॥

संयोगात्मा गकारश्च णकारोऽयोगवाचकः ।
तयोः स्वामी गणाधीशः संयोगायोगवर्जितः ॥ १६७॥

इति ते कथितं भूप ब्रह्मभूतस्वरूपकम् ।
किं श्रोतुमिच्छसि प्राज्ञ गमिष्यामो यदृच्छया ॥ १६८॥

जनक उवाच ।
गणेशो भक्तिभावेन नराधीनो भवेत् स्वयम् ।
न भक्तिसमभावाख्यं मोहदं तस्य सम्भवेत् ॥ १६९॥

अतो वदत मे भक्तिस्वरूपं योगिसत्तमाः ।
तया विघ्नेश्वरं नित्यं भजिष्यामि विशेषतः ॥ १७०॥

करभाजन उवाच ।
भक्तिश्च नवधा प्रोक्ता हृदये रसधारिणी ।
कथयामि समासेन स्वरूपं रसदायकम् ॥ १७१॥

श्रवणं कीर्तनं तस्य स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥ १७२॥

नवधा मानसी राजन् गतिः सर्वत्र वर्तते ।
भावेषु रससंयुक्ता दशमी नैव विद्यते ॥ १७३॥

यदा भक्तौ नरस्यैव रसः पूर्णः प्रवर्तते ।
तदाऽस्य नवधा नित्यं चित्तं तस्यां वसेत् स्वयम् ॥ १७४॥

यदा मुक्तौ तथा जन्तो रसः पूर्णो जनाधिप ।
तदा मुक्तिपदार्थेषु चित्तं तु नवधा भवेत् ॥ १७५॥

यदा च ब्रह्मभूतेषु रसस्तस्य प्रवर्तते ।
तदा नरस्य योगेषु चित्तं तन्नवधा भवेत् ॥ १७६॥

योगी भूत्वा नरो यस्तु भजते गणनायकम् ।
तस्यैव नवधा चित्तं गणेशे सर्वदा भवेत् ॥ १७७॥

योगिनां हृदि विघ्नेशः पूर्णरूपधरो वसेत् ।
अयोगिनां कलांशश्च तस्माद्योगी भवेन्नरः ॥ १७८॥

ततो गणेशरूपस्य भजनं पूर्णभावतः ।

भवत्यत्र न सन्देहो रसयुक्तं विशेषतः ॥ १७९॥

गणेशगुणवादानां प्रीत्या सम्पूर्णभावतः ।
प्रकुर्यात् स नरो नित्यं श्रवणं रससंयुतः ॥ १८०॥

सर्वश्रवणजातीनां रसं ज्वाल्य महामतिः ।
गणेशगुणवादेषु रसं पूर्णं स पश्यति ॥ १८१॥

एवं श्रवणभक्तिं त्वं प्राप्तां जानीहि भूमिप ।
समतो योगिषु श्रेष्ठो बुधैर्नृप न संशयः ॥ १८२॥

तथा कीर्तनभावश्च उत्पद्येत नराधिप ।
गाणेशकीर्तने भक्तिः प्राप्ता तेन विनिश्चितम् ॥ १८३॥

गणेशार्थं च या किञ्चिद्विस्मृतिस्तत्र नो भवेत् ।
तदा स्मरणभक्तिः सा प्राप्ता सम्पूर्णभावतः ॥ १८४॥

गणेशपादपद्मं यो मत्वा शाश्वतकं परम् ।
तत्रैव सकलो यत्नो भवेत्तत् पादसेवनम् ॥ १८५॥

(Page खं. ५ अ. ३० पान ७४)
साङ्गं गाणेश्वरं सर्वं कुरुते नित्यमादरात् ।
अर्चनात्मकरूपां तां भक्तिं प्राप्तो महामतिः ॥ १८६॥

गणेशान्न परं श्रेष्ठं वेदशास्त्रविचारतः ।
न चलेत् क्वापि जानीहि तदा वन्दनवान् भवेत् ॥ १८७॥

गाणपत्यानि चिह्नानि धृत्वा तत्परचेतसा ।
तदा दास्यात्मिका भक्तिः प्राप्ता तेन नराधिप ॥ १८८॥

अन्तर्बाह्यकृतं यद्वै तत्र साक्षी गणेश्वरः ।
अन्तर्भयेन भक्तिर्या सा प्रोक्ता सख्यरूपिणी ॥ १८९॥

पञ्चधा मोहयुक्तं स चित्तमुत्सृज्य योगतः ।
न भिन्नोऽहं गणेशानान् मत आत्मनिवेदकः ॥ १९०॥

मनोगतिः प्राज्ञ यत्र तत्र विघ्नेश्वरं सदा ।
भजते रससंयुक्तः स वै भक्तः प्रकीर्तितः ॥ १९१॥

रसरूपा स्वयं भक्तिर्यत्र पूर्णस्वभावतः ।
यस्य तिष्ठति जन्तुः स तद्भक्तः सम्मतो नृप ॥ १९२॥

भोगेषु न रसोत्पत्तिर्मुक्तौ च ब्रह्मभूयके ।
गणेशभक्तिभावेन भक्तस्यैवावतिष्ठति ॥ १९३॥

आदौ ते कथितं राजन् गणेशस्य स्वरूपकम् ।
ब्रह्माकारैर्महाचिह्नैः संयुक्तं योगदायकम् ॥ १९४॥

तत्र विश्वासभावेन तादृगुत्पद्यते रसः ।
तदा भक्तो महाराज भवते योगिवन्द्यकः ॥ १९५॥

नारदेनैव राजेन्द्र बोधितस्त्वं न बुध्यसे ।
तव भावपरीक्षार्थं भक्तिदानार्थमञ्जसा ॥ १९६॥

प्रेषितस्तेन विघ्नेशो वृद्धः कुष्ठयुतो द्विजः ।
समायातः सर्वभक्षी छलयामास साधुपम् ॥ १९७॥

नरदेहं समासाद्य गणेशं भजेत न यः ।
पशुतुल्यः स राजेन्द्र तस्य धिक् जन्म निश्चितम् ॥ १९८॥

मुद्गल उवाच ।
एवमुक्त्वा विदेहं तं जनकं योगिनो नव ।
अनुज्ञाप्य ययुस्तस्मात् स्वेच्छया गणपे रताः ॥ १९९॥

जनकस्तान्नमस्कृत्य स्वगृहे गणनायके ।
योगी नवविधां भक्तिमकरोद्भावसंयुतः ॥ २००॥

अहर्निशं गणेशानमभजन्नान्यचेतसा ।
जनकः सर्वभावेन योगिवन्द्यो बभूव ह ॥ २०१॥

तिष्ठन् स्वपन् पिबन् वाऽदन् गच्छन् विघ्नेश्वरे रतः ।
अतो गणेशसन्तुष्ट्या तद्वंशे जनका बभुः ॥ २०२॥

सर्वज्ञानसमायुक्ताः सर्वे साधुगुणान्विताः ।
गणेशभजने सक्ता बभूवुश्च प्रजापते ॥ २०३॥

नवयोगिषु यातेषु जनकस्त्रिशिरोभवम् ।
वृत्तान्तं परिशुश्राव गणेशगमनात्मकम् ॥ २०४॥

स्वयं तस्य गृहं गत्वा ननाम मुनिपुङ्गवम् ।
दैवीसमृद्धिसंयुक्तं योगपारङ्गतं परम् ॥ २०५॥

तेन सम्बोधितो राजा नित्यं दूर्वापरायणः ।
पुपूज गणनाथं तं सदा भक्तिसमन्वितः ॥ २०६॥

दूर्वाहीनां न पूजां स चकार मरणावधि ।
अन्ते स्वानन्दगो भूत्वा भजते गणनायकम् ॥ २०७॥

इदं जनकमाहात्म्यं कथितं ते प्रजापते ।
भुक्तिमुक्तिप्रदं नृभ्यः श्रवणात् पठनाद्भवेत् ॥ २०८॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पञ्चमे खण्डे लम्बोदरचरिते दूर्वामाहात्म्यवर्णनं नाम त्रिंशत्तमोऽध्यायः ॥ ५.३०

(Page खं. ५ अ. ३१ पान ७५)

## ५.३१ तुलसीवर्जनकारणं नामैकत्रिंशत्तमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

दक्ष उवाच ।
तुलसीवर्जिता पूजा कर्तव्या कथितं त्वया ।
किमर्थं पावनी सा तु दोषयुक्ता बभूव ह ॥ १॥

तुलस्या किं कृतं विप्र गणेशानस्य विप्रियम् ।
येन रुष्टोऽमरेशानस्तां तत्याज यशस्विनीम् ॥ २॥

मुद्गल उवाच ।
धर्मध्वजो महीपालो बभूवे धर्मसंयुतः ।
दाता मान्यो विशेषेण सुज्ञैः सर्वगुणान्वितः ॥ ३॥

तस्य पुत्री बभूवाऽसौ रूपलावण्यसंयुता ।
न तया सदृशी कुत्र वर्तते कामिनी विधे ॥ ४॥

वृन्दा नाम्नी च विख्याता प्रणम्य पितरं कदा ।
जगाद भावगम्भीरा चतुरा सुवयोयुता ॥ ५॥

वृन्दोवाच ।
तात विष्णुं परित्यज्य वृणोम्यन्यं न निश्चितम् ।
वरं तदर्थमेवं मां देहि तस्मै महामते ॥ ६॥

धर्मध्वज उवाच ।

विष्णुर्देववरः साक्षाद् भगवान् विश्वभावनः ।
स कथं च त्वया लभ्यो वरो लक्ष्मीपतिः सुते ॥ ७॥

मानुषेषु वरं पुत्रि वरयस्व हृदि स्थितम् ।
नरा वयं स वै साक्षाद् भगवान् भगधारकः ॥ ८॥

एवं नानाविधैर्भावैर्बोधिता न बुबोध सा ।
तदर्थं मन्त्रराजं सङ्गृह्य विष्णोर्वनं ययौ ॥ ९॥

ध्यात्वा चतुर्भुजं विष्णुं निराहारपरायणा ।
ततापं तप उग्रं सा पतिं विष्णुमभीप्सितम् ॥ १०॥

तीर्थेषु माधवं दृष्ट्वा तेषु क्षेत्रेषु मानद ।
तपस्तताप वृन्दोग्रं नानामार्गपरायणा ॥ ११॥

शुष्कपत्राणि वायुं सा जलं मूलं फलं तथा ।
भुक्त्वा सन्तोषयामास विष्णुं देववरं विधे ॥ १२॥

वर्षाणि लक्षसङ्ख्यानि गतानि तपसो बलात् ।
राजपुत्र्याश्च वृन्दाया न तुतोष जनार्दनः ॥ १३॥

अतीव तपसा तस्या अन्तर्ज्ञानं बभूव ह ।
आत्माकारं जगत् सर्वमपश्यद् बोधसंयुता ॥ १४॥

कदा विघ्नेश्वरं वृन्दा ददर्श नियमे रतम् ।
सम्पूज्य गणनाथं वै हृदि ध्यानपरायणम् ॥ १५॥

तं दृष्ट्वा कुञ्जरास्यं सा शिवपुत्रं नृपात्मजा ।
भागीरथीसन्निधिस्थं विस्मिताऽभूत् प्रजापते ॥ १६॥

गणेशार्थं समालोक्य मोहिताऽभूत् स्वचेतसि ।
अहो गणेश्वरः साक्षाद् ब्रह्मणां नायकः स्मृतः ॥ १७॥

अस्य कलांशसम्भूताः शिवविष्ण्वादयोऽपरे ।
पूर्णभावात्मकः साक्षाद् गणेशो नात्र संशयः ॥ १८॥

शिवेन तपसोग्रेणाराधितो गणनायकः ।
पुत्रोऽभूद्योगशान्तिस्थो भक्तभक्तिपदप्रदः ॥ १९॥

खेलत्यात्मानमाभज्य चतुर्धाऽनन्यभावतः ।
अयं विष्णुस्तथा शम्भुः शक्तिः सूर्यो न संशयः ॥ २०॥

पूर्णभावमविज्ञायाऽहं विष्णुपरमाऽभवम् ।
अधुना तं समालोक्य बोधयुक्ता न संशयः ॥ २१॥

तपःप्रभावसामर्थ्याद् वृणोमि गणनायकम् ।
व्यभिचारो न मे भावी विष्णुरूपोऽयमञ्जसा ॥ २२॥

एवं विचार्य विघ्नेशमाययौ ध्यानसंस्थितम् ।
ध्यानभङ्गार्थमुद्युक्ता वृन्दा तं प्रत्युवाच ह ॥ २३॥

वृन्दोवाच ।
त्वं साक्षाद् गणराजश्च तपसाऽऽराधितो भवान् ।
शिवपुत्रत्वमापन्नः किं ध्यायसि वदस्व माम् ॥ २४॥

शिवविष्ण्वादयो देवास्त्वां भजन्ति निरन्तरम् ।
(Page खं. ५ अ. ३१ पान ७६)
कुलदैवतरूपस्थं सर्वसिद्धिप्रदायकम् ॥ २५॥

गणेश्वरं समास्थाप्य कथं पूजयसेऽप्यहो ।
गणेश्वरो विशेषेण स्वयं ध्यायसि तं प्रभो ॥ २६॥

अहो चित्रं मया दृष्टं गणेशो गणनायकम् ।
भजतेऽनन्यभावस्थः शिवपुत्रत्वकारणात् ॥ २७॥

न त्वं शिवसुतः स्वामिन् न ते विघ्नेश्वरः कदा ।
कुलदेवस्तथाऽपि ध्यायसि किं गणपं प्रभो ॥ २८॥

तव स्मरणमात्रेण ब्रह्मभूता भवन्ति ते ।
नरा देवेन्द्रमुख्याश्च योगिनो वेदकादयः ॥ २९॥

स्वयं शान्तिप्रदाता त्वं किं ध्यायसि गणेश्वरम् ।
गणेश्वराशु वद मां वाक्यं सगुणनिर्गुण ॥ ३०॥

कामबाणार्दिता सा तं वृन्दा नानाप्रकारतः ।
बोधयामास विघ्नेशो ध्यानस्थो न बुबोध ताम् ॥ ३१॥

ततः सा जलबिन्दुं वै चिक्षेप गणपोपरि ।
तथापि ध्यानसंस्थो नालोकयत्तां गजाननः ॥ ३२॥

जघान मोहसंयुक्ताऽगुल्या तं सा ततोऽसकृत् ।

ध्यानं त्यक्त्वा गणाधीशस्तामपश्यत् पुरः स्थिताम् ॥ ३३॥

गणेशाय नम इति मन्त्रमुच्चार्य विघ्नपः ।
जगाद तां सकामां स निष्कामो गणपे रतः ॥ ३४॥

श्रीमहागणपतिरुवाच ।
काऽसि त्वं वद मातर्मां चापल्यगुणसंयुते ।
ध्यानभङ्गो न कर्तव्यः साधुभिश्च कदाचन ॥ ३५॥

गणेशकर्मसंस्थं तं नरं यश्च नराधमः ।
पृच्छते बोधयति वा स वै नरकगो भवेत् ॥ ३६॥

ध्यानभङ्गस्य दोषस्ते माऽस्तु बाले सुलक्षणे ।
मा कुरुष्व पुनस्त्वं च कर्म चापल्यसंयुता ॥ ३७॥

किमर्थमागता बाले वद मां काममोहिते ।
निष्कामं गणपे संस्थं गच्छ वा यत्र ते रुचिः ॥ ३८॥

वृन्दोवाच ।
धर्मध्वजस्य पुत्रीं मां विद्धि नानातपोयुताम् ।
वरो मम भव स्वामिन् भर्ता त्वं सर्वनायक ॥ ३९॥

सर्वासां त्वं विशेषेण भर्ताऽस्यत्र न संशयः ।
तथापि मां भजस्व त्वं भजमानां गजानन ॥ ४०॥

तस्यास्तद्वचनं श्रुत्वा प्रहस्य गणनायकः ।
उवाच कामबाणैस्तामर्दितां शान्तिधारकः ॥ ४१॥

श्रीमहागणपतिरुवाच ।
नाहं वृणोमि धर्मज्ञे स्त्रियं मोहयुतां कदा ।
तपसा त्वं वरं तुल्यं सुतुष्टं वरयस्व च ॥ ४२॥

सकामं पुरुषं पश्य सकामा त्वं नृपात्मजे ।
अहं गणेश्वरस्यैव दासो देवं भजामि तम् ॥ ४३॥

वृणोमि नैव निष्कामः सकामां देवि निश्चितम् ।
शान्तिस्था मे भवेत् पत्नी गच्छातो यत्र ते समः ॥ ४४॥

तस्य तद्वचनं श्रुत्वा पुनः सा तमुवाच ह ।
अहं शान्तिसमायुक्ता मां भजस्व दयानिधे ॥ ४५॥

तिरस्कृता गणेशेन निर्लज्जे गच्छ पुंश्चलि ।
तथाऽपि तं हठाद्देवी चालिलिङ्ग सुविह्वला ॥ ४६॥

अङ्कुशं गणनाथस्याकृष्य तं काममोहिता ।
नग्नं कर्तुं समुद्युक्ता क्रुद्धस्तां स शशाप ह ॥ ४७॥

दैत्यग्रस्ता सुदुर्बुद्धे भविष्यसि न संशयः ।
असुरीव स्पृशसि च मां दुष्टे हठसंयुता ॥ ४८॥

मूढेव मां समाकृष्य नग्नं कर्तुं समुद्यता ।
अतो वृक्षस्वरूपा त्वं मूढयोनौ पतिष्यसि ॥ ४९॥

(Page खं. ५ अ. ३२ पान ७७)
गणेशवचनं श्रुत्वा दारुणं भयसंयुता ।
त्यक्त्वा तं कम्पमानाङ्गी ननाम रुदती भृशम् ॥ ५०॥

उवाच तं गणाधीशं मां क्षमस्व महागसाम् ।
न योग्याऽहं गणाधीश तव वामाङ्गके कदा ॥ ५१॥

कम्पन्तीं रुदतीं वीक्ष्य दयायुक्तो गजाननः ।
जगाद तां प्रजानाथ परां ज्ञात्वा तपोयुताम् ॥ ५२॥

श्रीमहागणपतिरुवाच ।
गच्छ देवि न ते दुःखं भविष्यति कदाचन ।
असुरेण वने दृष्टा तत्र सक्ता भविष्यसि ॥ ५३॥

तत्र त्वां केशवः क्वापि शङ्खचूडस्वरूपधृक् ।
यप्स्यते स तदा दैत्यः शम्भुहस्तान् मरिष्यति ॥ ५४॥

ज्ञात्वा तं देहसन्त्यागं करिष्यसि हुताशने ।
पुनर्वृक्षस्वरूपस्था भविष्यसि न संशयः ॥ ५५॥

त्वया शप्तो महाविष्णुः शिलारूपधरो भवेत् ।
तेन सार्धं सदा देवि रंस्यसे त्वं निरन्तरम् ॥ ५६॥

पतिस्ते भविता विष्णुः सदा सुखप्रदायकः ।
मदीयकृपया देवि सर्वमान्या भविष्यसि ॥ ५७॥

देवानां पत्रपुष्पैस्त्वं प्रियाऽत्यन्तं भविष्यसि ।
त्वत्काष्ठसम्भवां मालां धरिष्यन्ति गले जनाः ॥ ५८॥

त्वामन्यकाष्ठवत् सर्वे मानयिष्यन्ति निश्चितम् ।
त्रिलोकस्था जना नैव मा चिन्तां कुरु भामिनि ॥ ५९॥

देवानां त्वं प्रिया भूया विष्णोरत्यन्तभावतः ।
पत्रैः पुष्पैश्च वृन्दे त्वां पूजयिष्यन्ति मानवाः ॥ ६०॥

मम वर्ज्या सदा देवि भविष्यसि न संशयः ।
गच्छ त्वं यत्र भावस्ते चिन्तां त्यक्त्वा विशेषतः ॥ ६१॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पञ्चमे खण्डे लम्बोदरचरिते तुलसीवर्जनकारणं नामैकत्रिंशत्तमोऽध्यायः ॥ ५.३१

## ५.३२ तुलसीवरप्रदानं नाम द्वात्रिंशत्तमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
यथा गजाननः प्राह तथा जातं प्रजापते ।
वृन्दा तं प्रणिपत्यैव तपसे वनमाययौ ॥ १॥

चिन्ताक्रान्ता स्वयं देवी गणेशे भावलालसा ।
गणेशं मनसि ध्यात्वा तताप तप उत्तमम् ॥ २॥

नाममन्त्रं जजापैव पूजयामास सादरम् ।
एवं लक्षं च लक्षार्धं वर्षाणि प्रगतानि च ॥ ३॥

ततस्तां गणराजस्तु वरदः सहसाऽऽययौ ।
प्रणम्य तं प्रपूज्यैव वृन्दा तुष्टाव हर्षिता ॥ ४॥

वृन्दोवाच ।
नमस्ते विघ्नराजाय भक्तविघ्नहराय च ।
अभक्तेभ्यो विशेषेण विघ्नदाय नमो नमः ॥ ५॥

परेशाय पराणां ते परात्परतराय च ।
भक्तेशाय सदा भक्तिप्रियाय ते नमो नमः ॥ ६॥

ब्रह्मेशाय गणाधीश ब्रह्मणां ब्रह्मरूपिणे ।
ब्रह्मणां पतये तुभ्यं गणाधिपतये नमः ॥ ७॥

अमेयायाप्रतर्क्याय सदा स्वानन्दवासिने ।

(Page खं. ५ अ. ३२ पान ७८)
शिवविष्णुमुखेभ्यश्च पददात्रे नमो नमः ॥ ८॥

अनाथाय च सर्वेषां नाथाय परमात्मने ।
वक्रतुण्डाय सर्वेषामादिपूज्याय ते नमः ॥ ९॥

विनायकाय वीराय शूर्पकर्णाय ढुण्ढये ।
गजाननाय चिन्तामणये हेरम्ब ते नमः ॥ १०॥

अनन्तगुणधाराय नानाखेलकराय ते ।
परेषां तु परेशाय मूषकध्वजिने नमः ॥ ११॥

पूर्णानन्दाय सर्वेषां मात्रे पित्रे नमो नमः ।
ज्येष्ठेभ्यो ज्येष्ठराजाय ज्येष्ठपदप्रदायिने ॥ १२॥

किं स्तौमि त्वां गणाधीश योगाकारं परात्परम् ।
अतस्त्वां प्रणमाम्येवं तेन तुष्टो भव प्रभो ॥ १३॥

गाणेशं देहि मे योगं गाणपत्यां च मां कुरु ।
क्षमस्व मेऽपराधं त्वं त्वदुल्लङ्घनभावजम् ॥ १४॥

अन्यत्त्वं मां गणाधीश मान्यां कुरु त्वदीयके ।
पूजने किञ्चिदल्पेन भावेन वरदायक ॥ १५॥

क्वाऽहं ते समतां नाथ सम्प्राप्नोमि कदापि न ।
तथा तपोमदेनैतत् कृतं क्षन्तुं त्वमर्हसि ॥ १६॥

एवं स्तुत्वा गणाधीशं प्रणनाम प्रजापते ।
वृन्दा तां प्रत्युवाचेदं वाक्यं वाक्यविशारदः ॥ १७॥

श्रीगणेश उवाच ।
मदीयं योगमाद्यं त्वं प्राप्स्यसे नात्र संशयः ।
गाणपत्या महाभागे भविष्यसि सदा सुते ॥ १८॥

भाद्रशुक्लचतुर्थ्यां ये महोत्सवपरायणाः ।
पूजयिष्यन्ति मां भक्त्या तत्र त्वां धारयाम्यहम् ॥ १९॥

एकविंशतिपत्राणि ह्यर्पयिष्यन्ति मानवाः ।
तत्र ते पत्रमेकं मे मान्यं देवि भविष्यति ॥ २०॥

उल्लङ्घनसमं पापं न भूतं न भविष्यति ।

स्वल्पोल्लङ्घनमात्रेण त्वं त्यक्ता च मया सदा ॥ २१॥

ये मामुल्लङ्घयिष्यन्ति तांस्त्यजामि निरन्तरम् ।
तत्रापि तपसा बद्धो वृन्दे त्वां मानयाम्यहम् ॥ २२॥

त्वया कृतमिदं स्तोत्रं भुक्तिमुक्तिप्रदं भवेत् ।
ब्रह्मभूयप्रदं पूर्णं पठते शृण्वते सदा ॥ २३॥

तुलसीं ये नरा मह्यमर्पयन्ति कदा सुते ।
तत्पापहरणं स्तोत्रं भविष्यति कृतं त्वया ॥ २४॥

उल्लङ्घनाघहं नित्यं भविष्यति विशेषतः ।
अनेन स्तुवतां नित्यं न सर्वं दुर्लभं भवेत् ॥ २५॥

एवमुक्त्वा गणाधीशोंऽतर्धानमगमत् स्वयम् ।
तुलसी हर्षसंयुक्ता बभूवे च प्रजापते ॥ २६॥

तदादि सा महाभागा बभूव विगतज्वरा ।
क्रमेण तुलसी जाता विष्णुपत्नी सुपूतिता ॥ २७॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पञ्चमे खण्डे लम्बोदरचरिते तुलसीवरप्रदानं नाम द्वात्रिंशत्तमोऽध्यायः ॥ ५.३२
(Page खं. ५ अ. ३३ पान ७९)

## ५.३३ तुलसीसमर्पणवर्जनवर्णनं नाम त्रयस्त्रिंशत्तमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

दक्ष उवाच ।
अज्ञानेन महायोगिन् ज्ञानेन तुलसीयुतम् ।
पूजनं गणनाथस्य कृतं तस्य फलं वद ॥ १॥

श्रुत्वा कथामृतं त्वत्तो न तृप्तोऽहं भवामि भोः ।
अहो गणेशभक्तिर्वै दुर्लभा नात्र संशयः ॥ २॥

मुद्गल उवाच ।
अत्र ते कथयिष्यामि इतिहासं पुरा भवम् ।
श्रवणात् संशयः सर्वो नाशं यास्यति तत्त्वतः ॥ ३॥

ब्राह्मणः कोऽपि दुर्बुद्धिर्बभूवे काश्यपे कुले ।

स तु नित्यं गणपतिं तुलस्याऽपूजयद्धठात् ॥ ४॥

अन्ये तत्र द्विजास्तं वै वारयन्तो विशेषतः ।
न वाक्यं जगृहे तेषां ज्ञानं बौद्धं खलोऽब्रवीत् ॥ ५॥

गणेशः सर्वरूपश्चेत् कुतस्तत्र प्रवर्तते ।
विधिनिषेधकाद्यं हि मा वदेत क्रियात्मकाः ॥ ६॥

ततः सर्वे भयोद्विग्ना बभूवुस्ते द्विजोत्तमाः ।
परस्परं समूचुर्वै गाणपत्याः प्रजापते ॥ ७॥

अहो गाणेश्वरे देहे तुलसी मस्तकेऽथवा ।
दृष्टा सद्यश्च निष्कास्या गाणपत्यैर्विशेषतः ॥ ८॥

अन्यैरपि न सन्देहो नो चेन्नरकगामिनः ।
उपानदादिसंयुक्तैरशुचिभिस्तदप्यहो ॥ ९॥

तत्र विलम्बभावेन पापभागी नरो भवेत् ।
किं कर्तव्यं द्विजैरन्यैर्दुष्टोऽयं कथ्यतां द्विजाः ॥ १०॥

यथा वज्रेण पीडां तु बुभुजुः पर्वतादयः ।
तथा विघ्नेश्वरः साक्षात्तुलस्या पीडितो भवेत् ॥ ११॥

ततः सर्वैर्विनिश्चित्य स गाणेशालयात्तदा ।
बहिष्कृतो महापापी स्वगृहे तादृशे रतः ॥ १२॥

ततः स्वल्पेन कालेन ममार काश्यपाधमः ।
नरकेषु च तं यामाः पातयामासुरञ्जसा ॥ १३॥

एककल्पसमं कालं नरकेषु स्थितोऽभवत् ।
क्रमेण सकलान् भुक्त्वा राक्षसोऽभूत् सुदारुणः ॥ १४॥

सदा क्षुधा समाविष्टो दाहरोगादिसंयुतः ।
अशक्तः सर्वकार्येषु वनेषु विचचार ह ॥ १५॥

एकदा तत्र गार्ग्यश्च समायातो निजेच्छया ।
गणेशभक्तमुख्यः स महायोगी प्रजापते ॥ १६॥

तं दृष्ट्वा राक्षसो दुष्टो भक्षितुं च समाययौ ।
गार्ग्यो गणेशमन्त्रेण मन्त्रितं जलमाक्षिपत् ॥ १७॥

जलस्पर्शजपुण्येन गार्ग्यदर्शनजेन सः ।
धर्मध्रुक् राक्षसो जातिस्मरस्तत्र बभूव ह ॥ १८॥

ततोऽतिखेदसंयुक्तः स रुरोद प्रणम्य तम् ।
जगाद प्राञ्जलिं बद्ध्वा हाहाकाररवाऽऽकुलः ॥ १९॥

धर्मध्रुगुवाच ।
रक्ष मां मुनिशार्दूल गाणपत्य महायशाः ।
त्वत्पादप्रवणं गार्ग्य मोचयाशु भवार्णवात् ॥ २०॥

ततः स सर्ववृत्तान्तं कथयामास राक्षसः ।
पूर्वजन्मभवं तस्मै गार्ग्याय भयसङ्कुलः ॥ २१॥

त्वदीयदर्शनेनैव मन्त्रितेन जलेन च ।
जातिस्मरत्वमापन्नो दुःखं ते कथयाम्यहम् ॥ २२॥

श्रुत्वा शरणगं वीक्ष्य दयायुक्तो महामुनिः ।
गणेशनाममन्त्रं स ददौ तस्मै हितावहम् ॥ २३॥

जगाद तं महायोगी जप त्वं नाममन्त्रकम् ।
नित्यं तथा तुलस्या वै कृतं स्तोत्रं पठस्व च ॥ २४॥

एवमुक्त्वांऽतर्दधेऽसौ गार्ग्यः परमपावनः ।
दुष्टो नित्यं तथा चक्रे दुःखं दृष्ट्वा भयाकुलः ॥ २५॥

(Page खं. ५ अ. ३४ पान ८०)
ततः क्षुधा सुशान्ता वै बभूवे तस्य दुर्मतेः ।
रोगहीनः सशक्तश्च गाणपत्यप्रियोऽभवत् ॥ २६॥

अन्ते गणेश्वरं सोऽपि जगाम दुःखवर्जितः ।
तत्र योगस्वभावेनाऽभजद्विघ्नेश्वरं विधे ॥ २७॥

एतत्ते कथितं सर्वं सङ्क्षेपेण चरित्रकम् ।
तुलसीवर्जने भूतं सर्वसंशयनाशनम् ॥ २८॥

तुलसीं गणनाथाय समर्पयति यो नरः ।
स चाण्डालो न सन्देहो नारकीभूमिसंस्थितः ॥ २९॥

वंशहानिर्भवेत्तस्य लक्ष्मीनाशस्तथा विधे ।
रोगाद्यैः पीडितोऽत्यन्तमन्ते नरकगो भवेत् ॥ ३०॥

तस्य स्पर्शं न कुर्यात् कः कृत्वा स्नानं समाचरेत् ।
सचैलस्नानहीनश्चेत् ज्ञात्वा पापी सदा भवेत् ॥ ३१॥

नाम तस्य प्रजानाथ न ग्राह्यं पापदायकम् ।
बहुनाऽत्र किमुक्तेन पापरूपः स वै स्मृतः ॥ ३२॥

इदं ते कथितं सर्वं पृच्छते च यथातथम् ।
श्रोतुमिच्छसि किं भूयश्चरित्रं वद साम्प्रतम् ॥ ३३॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पञ्चमे खण्डे लम्बोदरचरिते तुलसीसमर्पणवर्जनवर्णनं नाम त्रयस्त्रिंशत्तमोऽध्यायः ॥ ५.३३

## ५.३४ रुक्माङ्गदचरितं नाम चतुस्त्रिंशत्तमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

दक्ष उवाच ।
वद पूजां विधियुतां गणेशस्य सविस्तराम् ।
मानसीं बाह्यरूपां च सर्वसिद्धिप्रदायिनीम् ॥ १॥

गणेशलोकगं सर्वं माहात्म्यं कथयस्व मे ।
कीदृशोऽयं निजो लोको मुने केनैव लभ्यते ॥ २॥

मुद्गल उवाच ।
अत्र ते कथयिष्यामि पुरातनभवं शुभम् ।
इतिहासं महाभाग सर्वसिद्धिप्रदायकम् ॥ ३॥

पुरा ते कथितं स्थानं गणेशस्य महात्मनः ।
कार्तिकेयवराज्जातं लक्षवैनायकात्मकम् ॥ ४॥

तत्र राजा बभूवाऽपि सर्वशास्त्रविशारदः ।
ऐलः शस्त्रास्त्रतत्त्वज्ञो धर्मशीलश्च सत्यवाक् ॥ ५॥

सदा गणेशभक्तश्चाभजद्विघ्नेश्वरं सदा ।
सार्वभौमः सुविख्यातो गाणपत्यप्रियोऽभवत् ॥ ६॥

तत्राऽऽजगाम गाणेशो गार्ग्यः सर्वार्थकोविदः ।
तं प्रणम्य प्रपूज्यैव पप्रच्छैलो महायशाः ॥ ७॥

ऐल उवाच ।
स्वामिंस्त्वं गणराजस्य भक्तस्तादृशयोगधृक् ।
साक्षाद्गणपतिः किं वा त्वमेवात्र न संशयः ॥ ८॥

मयूरेशावतारे त्वं मयूरेशसमन्वितः ।
स्थितस्तत्र त्वया विप्र मयूरेशो निरीक्षितः ॥ ९॥

धन्यस्त्वं योगिनां मध्ये प्रत्यक्षं गणनायकम् ।
मित्रं कृत्वा सुहर्षेणाऽहो तिष्ठसि विशेषतः ॥ १०॥

मयूरेशस्य विप्रेशाज्ञया योगविदांवर ।
भाष्यं कृतं गणेशस्य गीतायाः शान्तिदं परम् ॥ ११॥

(Page खं. ५ अ. ३४ पान ८१)
त्वदीयभाष्ययोगेन गीताज्ञा ब्राह्मणादयः ।
बभूवुर्गाणपत्याश्च त्वच्छिष्यास्ते मता मुने ॥ १२॥

यादृशं गणनाथेन कथितं तादृशं प्रभो ।
त्वया ज्ञातं न सन्देहो गणेशस्त्वमतो मतः ॥ १३॥

गणेशगीताहार्दं यद्गणेशश्च वरेण्यकः ।
त्वं त्रयः सम्मताः शास्त्रे जानते पूर्णयोगतः ॥ १४॥

धन्येन येन भाग्येन दृष्टं ते पादपङ्कजम् ।
विद्याव्रततपोदानं पितरौ कुलमेव मे ॥ १५॥

यशो राज्यादिकं सर्वं धन्यं ते पाददर्शनात् ।
न ह्यल्पपुण्ययोगेन दर्शनं योगिनां भवेत् ॥ १६॥

अधुना वद मे ब्रह्मन् गणेशस्य यथाविधि ।
पूजां बाह्यां तथांऽऽतर्यां गाणपत्यप्रकारतः ॥ १७॥

एवं पृष्टो महायोगी गार्ग्यः सर्वार्थकोविदः ।
तं जगाद सुहर्षेण गाणपत्यो महायशाः ॥ १८॥

गार्ग्य उवाच ।
अत्र ते कथयिष्यामि चेतिहासं पुरातनम् ।
गृत्समदस्य विप्रस्य चरित्रसंयुतं नृप ॥ १९॥

वाचक्नविस्तपोनिष्ठो बभूव परमार्थवित् ।

तस्य पत्नी मुकुन्दा वै रूपयौवनशालिनी ॥ २०॥

वनमध्ये स्थितौ चोभौ तत्राकस्मात् समागतः ।
रुक्माङ्गदो नृपो भूप मृगयासक्तचेतसा ॥ २१॥

क्षुधातृषायुतो राजा भ्रष्टसार्थो द्विजाश्रमम् ।
प्रविश्य तं प्रणम्यैव सस्त्रीकं संस्थितोऽभवत् ॥ २२॥

तस्मिन् काले द्विजः सोऽपि मध्याह्ने कर्मकारणात् ।
निर्जगामाश्रमाद्वाचन्कविस्तस्मान् महायशाः ॥ २३॥

गते मुनौ नृपस्तत्र जगाद देहि मे जलम् ।
मातर्मुकुन्दे श्रान्ताय चाकुलाय क्षुधातृषा ॥ २४॥

तस्य तद्वचनं श्रुत्वा मुनिपत्नी सुविह्वला ।
दृष्ट्वा नृपवरं तं च कामबाणार्दिताऽवदत् ॥ २५॥

मुकुन्दोवाच ।
त्वत्समं पुरुषं क्वापि न पश्यामि नृपात्मज ।
त्रैलोक्येऽतो महाभाग मां भजस्व सुविह्वलाम् ॥ २६॥

नो चेत् प्राणा गमिष्यन्ति कामबाणैर्हता मम ।
इत्युक्त्वा तं नृपं सा तु चुचुम्बे हठतत्परा ॥ २७॥

ततोऽतिक्षोभितो राजा धृत्वा दूरे समाक्षिपत् ।
जगाद तां मुनेः पत्नीं व्यभिचाररतां वचः ॥ २८॥

रुक्माङ्गद उवाच ।
सर्वेषां गुरवो देवि ब्राह्मणा नात्र संशयः ।
पुत्रतुल्या वयं सर्वे त्वदीयाः पापकारिणि ॥ २९॥

तत्र विघ्नेश्वरे सक्ता न चलन्ति कदाचन ।
परस्त्रियं समालोक्य मातृबुद्धिकरा मताः ॥ ३०॥

एवं निर्भर्त्स्य तां राजा निःसृतः शोकसङ्कुलः ।
आश्रमात् सा शशापैव तं नृपं काममोहिता ॥ ३१॥

कुष्ठी भव महादुष्ट सकामां त्यजसि स्त्रियम् ।
मोहितां पापकर्मा त्वं कठिनोऽसि सुदुर्मते ॥ ३२॥

तस्याः शापस्य योगेन श्वेतकुष्ठी बभूव ह ।

रुक्माङ्गदो वने गत्वा सस्मार द्विरदाननम् ॥ ३३॥

ततो रात्रौ महायोगी नारदस्तत्र चागतः ।
तं दृष्ट्वा प्रणनामादौ पप्रच्छ विनयान्वितः ॥ ३४॥

रुक्माङ्गद उवाच ।
कुष्ठनाशकरं तीर्थं क्षेत्रमौषधमेव च ।
वद मे सर्वधर्मज्ञ गाणपत्यप्रिय प्रभो ॥ ३५॥

नारद उवाच ।
इन्द्रेण तपसा देवो गणेशः पूजितोऽभवत् ।
(Page खं. ५ अ. ३४ पान ८२)
सहस्रभगनाशार्थं स देवो वरदोऽभवत् ॥ ३६॥

गणेशवरदानेन महेन्द्रस्तेजसा युतः ।
योगयुक्तोऽपालयत त्रैलोक्यं सचराचरम् ॥ ३७॥

तत्र तीर्थं सुविख्यातं गणेशपदलाञ्छितम् ।
चिन्तामणिर्गणेशश्च तेन संस्थापितोऽभवत् ॥ ३८॥

तत्र गत्वा महीपाल कुरु स्नानं च तत्क्षणात् ।
कुष्ठहीनः सुवर्णस्त्वं भविष्यसि न संशयः ॥ ३९॥

तत्र तीर्थप्रभावेण कुष्ठरोगविवर्जिताः ।
भवन्ति स्वानन्दगास्तु नृप नास्त्यत्र संशयः ॥ ४०॥

एवमुक्त्वा महायोगी नारदो गणपं स्मरन् ।
गतः सोऽपि महाबुद्धिर्हर्षयुक्तो बभूव ह ॥ ४१॥

ततः प्रातः समायाता सेना तस्य महात्मनः ।
तया सार्द्धं जगामाऽसौ विदर्भे तीर्थसेवकः ॥ ४२॥

चिन्तामणिभवं तीर्थं दृष्ट्वा राजा प्रजापते ।
कुष्ठहीनो बभूवाऽथ सर्वैः संहर्षितोऽभवत् ॥ ४३॥

ततः स्नात्वा ससैन्येन यथाविधियुतः स्वयम् ।
पूजयामास हर्षेण चिन्तामणिं नृपात्मजः ॥ ४४॥

पूजयित्वा यथान्यायं दत्त्वा दानानि कृत्स्नशः ।
संस्थितो मण्डपे राजा गणेशे भक्तिसंयुतः ॥ ४५॥

तत्राकस्माद्विमानं तु समायातं सुखप्रदम् ।
तत्र दूता गणेशस्य जगुस्तं नृपसत्तमम् ॥ ४६॥

गाणपत्या ऊचुः ।
इदं विमानमारुह्य ससैन्यो नृपसत्तम ।
चल स्वानन्दलोके त्वं तीर्थस्नानप्रभावतः ॥ ४७॥

ततोऽतिहर्षसंयुक्तस्तान् प्रणम्य महायशाः ।
पूज्योवाच विचारज्ञो गाणपत्यो नृपात्मजः ॥ ४८॥

रुक्माङ्गद उवाच ।
भीमं मे गाणपत्यास्तु पितरं चारुहासिनीम् ।
मातरं त्यज्य विघ्नेशं कथं यामि त्वरान्वितः ॥ ४९॥

गाणेशानौ विशेषेण तथा तं ते समब्रुवन् ।
तयोः स्नानं नृपाध्यक्ष कुरु तीर्थेऽधुना किल ॥ ५०॥

ततस्तावपि नेष्यामो मा चिन्तां कुरु सत्तम ।
स्नानमात्रेण स्वानन्ददायकं तीर्थमुच्यते ॥ ५१॥

ततोऽतिहर्षितो राजा कुशान् गृह्य तयोः पुनः ।
नाम्ना ग्रन्थिं समाबध्य चक्रे स्नानं यथाविधि ॥ ५२॥

ततोऽतिहर्षिता लोका नगरस्थास्तथा पुनः ।
स्नानं चक्रुर्जनानां ते आबालं श्वपचावधि ॥ ५३॥

ततस्ते यानमारुह्य कौण्डिन्यनगरं ययुः ।
पुण्यं दत्वा च तान् सर्वान् गृह्य स्वानन्दमाययुः ॥ ५४॥

एवं तीर्थप्रभावेण नगरस्थजना नृप ।
गत्वा विघ्नेश्वरं दृष्ट्वा ब्रह्मभूता बभूविरे ॥ ५५॥

धर्मयुक्तो गणेशस्य भक्तो रुक्माङ्गदः स्वयम् ।
स्वल्पकालेन निर्विघ्नो बभूव छलितोऽपि सः ॥ ५६॥

गणेशभक्तमत्युग्रं ये छलन्ति नराधमाः ।
तेषां तु निष्कृतिर्नास्ति दुःखं भुञ्जन्ति दारुणम् ॥ ५७॥

रुक्माङ्गदं मुकुन्दा सा छलयित्वा विशेषतः ।
या गतिश्च तया प्राप्ता तां शृणुष्व महीपते ॥ ५८॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पञ्चमे खण्डे लम्बोदरचरिते रुक्माङ्गदचरितं नाम चतुस्त्रिंशत्तमोऽध्यायः ॥ ५.३४

(Page खं. ५ अ. ३५ पान ८३)

## ५.३५ गृत्समदगणेशसमागमो नाम पञ्चत्रिंशत्तमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

गार्ग्य उवाच ।

मुकुन्दा कामदग्धा सा पपात धरणीतले ।
न किञ्चित् सुखदं तस्या बभूव पृथिवीतले ॥ १॥

ततोऽतिशोकसंयुक्ता तमेवाचिन्त्य संस्थिता ।
निद्रां लेभे ततस्तां सोऽबोधयद्देवनायकः ॥ २॥

तस्याः शान्तिप्रदानार्थं स्वयं तत्राजगाम ह ।
रुक्माङ्गदस्वरूपी स बुभुजे तां सुराधिपः ॥ ३॥

सा हर्षिता जगामैव स्वगृहं गर्भसंस्थिता ।
इन्द्रः स्वर्गं ययौ भूप हर्षयुक्तो विहायसा ॥ ४॥

वाचक्नविः समायातः कृत्वा नित्यक्रियां मुनिः ।
न बुबोध मुकुन्दायाश्चरितं स तपोरतः ॥ ५॥

ततः पूर्णे च गर्भे सा सुषुवे पुत्रमुत्तमम् ।
जातकर्मादिकं सर्वं चकार मुनिसत्तमः ॥ ६॥

गृत्समदेति पुत्रस्य नाम चक्रे सुखप्रदम् ।
चकार व्रतबन्धं तु पञ्चमे हर्षसंयुतः ॥ ७॥

वेदानध्यापयामास श्रवणग्राहकाय वै ।
स्वयं तस्मै ददौ मन्त्रं गणानां त्वेति ऋग्भवम् ॥ ८॥

तेन मन्त्रेण विघ्नेशं ध्यात्वा गृत्समदो मुनिः ।
तोषयामास भावेन नित्यं जपपरायणः ॥ ९॥

कदाचित्तत्र राजा स मगधस्तं जुहाव च ।
पितुः श्राद्धे सुदान्तं वै तपोयुक्तं यशस्विनम् ॥ १०॥

तत्र वसिष्ठमुख्याश्च मुनयो योगपारगाः ।

समागताः सभायां ते विविशुः पूजिता नृप ॥ ११॥

तत्र शास्त्रप्रसङ्गे स गृत्समद उवाच ह ।
योगमयोगिभावस्थः श्रुत्वाऽत्रिस्तं वचोऽब्रवीत् ॥ १२॥

अयोगी योगिनां मध्ये रुक्माङ्गदसुतस्तथा ।
वदसि त्वं न योग्योऽसि पङ्क्तौ गच्छ निजाश्रमम् ॥ १३॥

ततोऽतिकोपसंयुक्तः स्वं गृत्समद आश्रमम् ।
जगाम सोऽपि जननीमपृच्छद्रक्तलोचनः ॥ १४॥

वद तातं मदीयं त्वं कामुके निरपत्रपे ।
कथं रुक्माङ्गदाज्जातोऽहं नोचेत्त्वां शपामि तु ॥ १५॥

जगाद शापभीता तं ततः सा कम्पसंयुता ।
वृत्तान्तं पूर्वसम्भूतं रुक्माङ्गदविहारजम् ॥ १६॥

तच्छ्रुत्वा कोपसंयुक्तः शशाप जननीं सुतः ।
कण्टकी भव मातस्त्वं दुष्टकर्मपरायणा ॥ १७॥

अतितिक्तफलां तत्र भक्षिष्यन्ति नरा न ताम् ।
अरण्ये निन्दिता नित्यं भुङ्क्ष्व पापं पुरा कृतम् ॥ १८॥

ततः सापि स्वपुत्रं तं शशाप क्रोधपूरिता ।
त्वत्तः पुत्रो महादैत्यो भविष्यति सुदारुणः ॥ १९॥

ततो देहं समुत्सृज्य मुकुन्दा साऽभवन्नृप ।
कण्टकी श्यामसंज्ञा सा पापकर्मपरायणा ॥ २०॥

गणेशभक्तविक्षेपदातृत्वादघमुत्तमम् ।
तया प्राप्तं चिरं पूर्णं तेन शापयुताऽभवत् ॥ २१॥

कल्पे कल्पे च शापात् सा सदा वृक्षत्वमागता ।
पश्य विघ्नस्वरूपं त्वं महाभयकरं नृप ॥ २२॥

ततो गृत्समदः क्षुब्धो देहत्यागे समुद्यतः ।
तत आकाशवाणी तं जगाद प्रेमसंयुता ॥ २३॥

इन्द्रो रुक्माङ्गदीभूतस्तस्माज्जातोऽसि मानद ।
भज लम्बोदरं नित्यं ततः सौख्यमवाप्स्यसि ॥ २४॥

श्रुत्वा सोऽपि वने गत्वा ततापं तप उत्तमम् ।
निराहारेण संस्थश्च गणेशमभजत् सदा ॥ २५॥

ब्रह्मणस्पतिसूक्तैश्चाभिषिञ्चन् मण्डले स्थितम् ।
(Page खं. ५ अ. ३५ पान ८४)
जपं चकार भावेन ब्राह्मणत्वस्य कारणात् ॥ २६॥

ऐल उवाच ।
ब्रह्मणस्पतिसूक्तानां मण्डलं कीदृशं स्मृतम् ।
फलं च कीदृशं तत्र लभते मानवः प्रभो ॥ २७॥

कथयस्व विधानेन सर्वज्ञोऽसि दयानिधे ।
येन विघ्नेश्वरः प्रीतो भवेत् सर्वार्थदायकः ॥ २८॥

गार्ग्य उवाच ।
ब्रह्मणस्पतिसूक्तानां विधिं शृणु महामते ।
यथा गृत्समदः सिद्धो बभूवे तस्य सेवनात् ॥ २९॥

गणानां त्वेति मन्त्रेण षोडशाङ्गेषु भूमिप ।
न्यासं कुर्यात्तथा पूज्याऽभिषेकं तु समाचरेत् ॥ ३०॥

एकविंशतिभिर्भूपा वृत्तिभिरेकविंशतिः ।
समाख्याता च सूक्तानामभिषेके तथा जपे ॥ ३१॥

एतादृशाश्च राजेन्द्र भवन्त्येकाधिकास्ततः ।
विंशत्यो मण्डलं ह्येकं ज्ञातव्यं विबुधैः परम् ॥ ३२॥

मण्डलानि महाभाग एकविंशन्मितानि च ।
भवन्ति चेत् समाख्यातं महामण्डलकं बुधैः ॥ ३३॥

अभिषेके समाख्यातं जपे वा राजसत्तम ।
सर्वसिद्धिप्रदं पूर्णं महामण्डलकं सुरैः ॥ ३४॥

धर्मार्थकाममोक्षेषु प्रशस्तं कर्म सिद्धिदम् ।
गणेशप्रीतये भक्त्या ब्रह्मभूतकरं भवेत् ॥ ३५॥

ब्राह्मणत्वस्य कार्यार्थं कृतं तेन महात्मना ।
गृत्समदेन सूक्तानां महामण्डलकं नृप ॥ ३६॥

एतत्ते कथितं भूपाधुना शृणु कथानकम् ।

विघ्नेशप्रापकं गृत्समदस्य दुरितापहम् ॥ ३७॥

स्वयं गृत्समदस्तत्र नित्यं कृत्वा यथाविधि ।
गणानां त्वेति मन्त्रेण पुपूज विघ्ननायकम् ॥ ३८॥

एकविंशतिमेकां स नित्यं चकार भूमिप ।
अभिषेकार्थमेवं तु ततो जपपरोऽभवत् ॥ ३९॥

गणानां त्वेति मन्त्रस्य जपं चकार नित्यदा ।
शतानि ध्याननिष्ठः स सैकविंशतिकानि तु ॥ ४०॥

नासाग्रन्यस्तदृष्टिश्च सदा यत्नपरायणः ।
महोग्रतपसा देवं तोषयामास विघ्नपम् ॥ ४१॥

एवं वर्षसहस्रैस्तु दिव्यैर्विघ्नेश्वरो ययौ ।
मुनिं तं भक्तवात्सल्यादुवाच ध्यानसंस्थितम् ॥ ४२॥

श्रीगणेश उवाच ।
पश्य मां मूनिशार्दूल ब्रह्मणस्पतिमागतम् ।
वरयस्व वरान् मत्तो दास्यामि तुभ्यमादरात् ॥ ४३॥

गणेशवचनं श्रुत्वा गृत्समदः सुहर्षितः ।
उन्मील्य लोचने ढुण्ढिमपश्यन्निकटे स्थितम् ॥ ४४॥

ततोऽतिहर्षसंयुक्तः प्रणनाम विनायकम् ।
भक्त्या सम्पूज्य तुष्टाव साश्रुनेत्रो नराधिप ॥ ४५॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पञ्चमे खण्डे लम्बोदरचरिते गृत्समदगणेशसमागमो नाम पञ्चत्रिंशत्तमोऽध्यायः ॥ ५.३५

(Page खं. ५ अ. ३६ पान ८५)

## ५.३६ गृत्समदवरप्रदानं नाम षड्त्रिंशत्तमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

गृत्समद उवाच ।
नमस्ते ब्रह्मणां नाथ ब्रह्मणां ब्रह्मरूपिणे ।
ब्रह्मणस्पतये तुभ्यं गणेशाय नमो नमः ॥ १॥

ज्येष्ठराजाय ज्येष्ठानां ज्येष्ठपदप्रदायिने ।
ज्येष्ठानां ज्येष्ठरूपाय सर्वपूज्याय ते नमः ॥ २॥

कर्तृणां कतृरूपाय कवये कविनायक ।
कर्तृभ्यः कर्तृदात्रे वै कविराजाय ते नमः ॥ ३॥

जगत्सु ब्रह्मसु प्राज्ञ नानाभोगकराय ते ।
उपमान्नप्रभोक्त्रे तु ब्रह्मभोक्त्रे नमो नमः ॥ ४॥

सदा मोहयुतायैव मोहमोहकराय ते ।
जीवाय बृहतां नाथाय बृहस्पतये नमः ॥ ५॥

सदा ब्रह्मसुखस्थाय परमात्मस्वरूपिणे ।
गुहाहिताय साङ्ख्याय बृहस्पतिसखाय ते ॥ ६॥

स्वसंवेद्यमयायैव स्वानन्दे योगधारिणे ।
जीवानां ब्रह्मणां संयोगाय ते वै नमो नमः ॥ ७॥

सत्यायायोगरूपाय मनोवाणीविवर्जित ।
भद्राणां भद्रकायैव सत्यसत्याय ते नमः ॥ ८॥

सर्वेषां पोषकायैव सोमायामृतरूपिणे ।
सोमानां सोमदात्रे ते पुष्टिनाथाय ते नमः ॥ ९॥

उत्तिष्ठत्सृष्टिकर्त्रे ते पालकाय हराय च ।
त्रयीमयाय तूर्याय तूर्यातीताय ते नमः ॥ १०॥

इन्द्रादिदेवतानां वै सहायाय नमो नमः ।
धर्मपालकभावाय धर्माधीशाय ते नमः ॥ ११॥

सर्वेषां राज्यदात्रे वै राज्यराजाय ते नमः ।
अराज्याय परेशाय संसारार्णवतारिणे ॥ १२॥

योगेभ्यो योगदात्रे च योगयोगाय ते नमः ।
शान्तिदाय सदा शान्तिस्थाय तत्पतये नमः ॥ १३॥

इत्यादि भेदा बहवो ब्रह्मणो वेदवादतः ।
तेषां स्वामिस्वरूपाय ब्रह्मणे ते नमो नमः ॥ १४॥

किं स्तौमि गणनाथ त्वां ब्रह्मणस्पतिरूपिणम् ।
भव प्रसन्नो ब्रह्मेश कृपया ते नमो नमः ॥ १५॥

एवं गृत्समदः स्तुत्वा गणेशानं महीपते ।
हर्षेणोत्फुल्लनयनो ननर्त प्रेमविह्वलः ॥ १६॥

दृष्ट्वा तं गणराजस्तु जगाद घननिस्वनः ।
वरं मत्तस्त्वं वरयाधुना स्तोत्रेण तोषितः ॥ १७॥

त्वया कृतमिदं स्तोत्रं सर्वसिद्धिप्रदायकम् ।
भविष्यति न सन्देहो मम भक्तिविवर्धनम् ॥ १८॥

सदा शान्तिमयो भूत्वा मां भजिष्यसि मानद ।
त्वया कृतेन स्तोत्रेण ब्रह्मभूतो भविष्यसि ॥ १९॥

पुत्रपौत्रादिकं सर्वं धनधान्यादिवर्धनम् ।
प्रभविष्यति पाठेन श्रवणेन मुनेऽस्य तु ॥ २०॥

तस्य तद्वचनं श्रुत्वा सावधानो बभूव ह ।
नियम्य हर्षमुग्रं स प्रणनाम गजाननम् ॥ २१॥

उवाच विस्खलद्वाक्यो मुनिर्गृत्समदो महान् ।
गणेशं भक्तिसंयुक्तो भक्तराजेश्वरः स्वयम् ॥ २२॥

गृत्समद उवाच ।
धन्यौ मे जनकौ नाथ जन्म धन्यं तपो वयः ।
विद्या व्रतादिकं सर्वं त्वदङ्घ्रियुगदर्शनात् ॥ २३॥

अहो साक्षाद्गणेशानो ब्रह्मेन्द्रो दृष्टिमागतः ।
मनोवाणीविहीनो न ताभ्यां युक्तो न वै भवान् ॥ २४॥

एतादृशं गणेशानं दृष्ट्वा त्वां किं वृणोम्यहम् ।
तथापि वरयामि त्वां त्वदाज्ञापालनार्थतः ॥ २५॥

ब्रह्मभूताश्च वेदेषु ब्राह्मणाः कथिता बुधैः ।
(Page खं. ५ अ. ३६ पान ८६)
अतो मां ब्राह्मणं नाथ कुरु योगीन्द्र वन्द्यकम् ॥ २६॥

यथा त्वं ब्रह्मणां नाथस्तथाऽहं ब्रह्मभूयिनाम् ।
नाथो भवामि विघ्नेश योगीन्द्राणां गुरोर्गुरुः ॥ २७॥

त्वदीयपादपद्मे वै भक्तिं देहि गजानन ।

सुदृढां गाणपत्येषु सङ्गं देहि सदा च मे ॥ २८॥

गाणपत्येषु विख्यातं मां कुरुष्व विशेषतः ।
गृत्समदसमो नास्ति गाणपत्यस्वभावधृक् ॥ २९॥

एवमुक्त्वा गणेशानं प्रणनाम महामुनिः ।
तमुवाच गणेशानो भक्तिं दृष्ट्वा महाद्भुताम् ॥ ३०॥

श्रीगणेश उवाच ।
गणानां त्वेति मन्त्रस्य जपः खलु कृतस्त्वया ।
सूक्तस्यापि तथा मे वै तत्र मुख्यो भविष्यसि ॥ ३१॥

ऋषिर्भव महाभाग गणानां त्वास्य मन्त्रतः ।
सूक्तस्यापि विशेषेण ब्राह्मणेन्द्रो भवापि तु ॥ ३२॥

आदावृषेश्च यज्ञादौ स्मरणं ते करिष्यति ।
पश्चान् मे देवतायाश्च मुख्यो भव मदीयके ॥ ३३॥

न त्वत्समो भवेत् कुत्र मद्भक्तेषु महामुने ।
मानयिष्यन्ति विप्रास्त्वामत्रिमुख्या न संशयः ॥ ३४॥

त्वदीयस्मरणं नास्ति मन्त्रे वैदिकगे च मे ।
गणानां त्वा जपिष्यन्ति फलहीना भवन्तु ते ॥ ३५॥

शिवविष्ण्वादयो देवा ब्रह्माद्या ब्राह्मणा नराः ।
शेषाद्याश्चासुराद्याश्च त्वां नमस्यन्ति नित्यदा ॥ ३६॥

त्वदीयावज्ञया क्रुद्धो दहिष्यामि चराचरम् ।
त्वदीयहृदये नित्यं स्थास्यामि भक्तिलोलुपः ॥ ३७॥

त्वया यत्र तपस्तप्तं तदेव क्षेत्रमुत्तमम् ।
भविष्यति मदीयं वै पुष्पकं सर्वसिद्धिदम् ॥ ३८॥

भुक्तिं मुक्तिं ब्रह्मभूयं भक्तिं पुष्णाति मानद ।
तेन क्षेत्रं समाख्यातं पुष्पकं मत्समाश्रितम् ॥ ३९॥

यद्यच्चिन्तयसि प्राज्ञ तत्तत्ते सफलं भवेत् ।
स्मरणेन महाकार्ये प्रत्यक्षोऽहं भवामि च ॥ ४०॥

एवमुक्त्वांऽतर्दधेऽसौ ब्रह्मणस्पतिरञ्जसा ।
स्वयं गृत्समदः खिन्नोऽभवत्तत्रैव संस्थितः ॥ ४१॥

ततः स ब्राह्मणैः सार्धं स्थापयामास विघ्नपम् ।
ब्रह्मणस्पतिनामानं चकार क्षेत्रसंस्थितम् ॥ ४२॥

ततो गृत्समदो योगी सर्वमान्यो बभूव ह ।
ब्रह्मणस्पतिभक्तश्च ब्राह्मणैः पूजितोऽभवत् ॥ ४३॥

यथा गजाननः प्राह तथा सर्वं बभूव ह ।
मुनिस्तत्र महीपालाऽभजत्तं स विनायकम् ॥ ४४॥

नित्यं च मानसीं पूजां बाह्यां चकार विप्रपः ।
गणेशस्याऽतिभक्तो गृत्समदः सर्वतो बभौ ॥ ४५॥

इदं गृत्समदाख्यानं कथितं सर्वसिद्धिदम् ।
सर्वपापहरं पुण्यं श्रवणात् पठनान्नृणाम् ॥ ४६॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पञ्चमे खण्डे लम्बोदरचरिते गृत्समदवरप्रदानं नाम षड्त्रिंशत्तमोऽध्यायः ॥ ५.३६

(Page खं. ५ अ. ३७ पान ८७)

## ५.३७ गृत्समदनित्यकर्मवर्णनं नाम सप्तत्रिंशत्तमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

ऐल उवाच ।
कथं नित्यं महायोगी गाणपत्याग्र्य एव च ।
महापूजां गृत्समदो द्विविधां प्रचकार ह ॥ १॥

तन्मे विस्तरतो ब्रूहि धन्योऽयं ब्राह्मणेषु वै ।
गणेशेन कृतो विप्रो ऋषिः स्वसूक्तकस्य च ॥ २॥

गार्ग्य उवाच ।
शृणु तस्य मुनीन्द्रस्य चरित्रं भक्तिसंश्रितम् ।
यथा गजाननं सोप्यभजत्तं नित्यमादरात् ॥ ३॥

प्रातः काले समुत्थाय गुरुं नत्वा स्वमस्तके ।
मानस्या पूजया पूज्य तथा हृदि गणेश्वरम् ॥ ४॥

गाणेशांश्च तथा स्मृत्वा विभूतिरूपधारकान् ।

क्षमाप्य धरणीं पश्चात् पादं चिक्षेप विप्रपः ॥ ५॥

शौचाचारमशेषं च चकार शास्त्रमार्गतः ।
दन्तकाष्ठं ततो भक्ष्य स्नानं चक्रे यथाविधि ॥ ६॥

आदावाभ्यन्तरं स्नानं चकार शृणु तन्नृप ।
वक्ष्यामि सिद्धिदं पूर्णमज्ञानमलनाशनम् ॥ ७॥

सहस्रारे समासीनं गजाननमनामयम् ।
अङ्गुष्ठपर्वमात्रं तं प्रभुं ध्यायेच्चतुर्भुजम् ॥ ८॥

पाशाङ्कुशधरं पूर्णं दन्ताभयसमन्वितम् ।
त्रिनेत्रं भूषणैर्युक्तमनर्घ्यवस्त्रराजितम् ॥ ९॥

पादाङ्गुष्ठाग्रसम्भूतां तस्य तीर्थमयीं पराम् ।
सरितं चिन्तयेत् पूर्णामासमन्तात् प्रसारिणीम् ॥ १०॥

सर्वान्तर्गतजं पूर्णमज्ञानं मलरूपकम् ।
तया सङ्क्षालयेच्चित्ते नृप सर्वगया सुधीः ॥ ११॥

एवमान्तरगं स्नानं यः करोति नरोत्तमः ।
स सर्वमलहीनश्च भुक्तिं मुक्तिं लभेत् पराम् ॥ १२॥

बाह्यं ततः समाख्यातं वैदिकं तान्त्रिकं द्विधा ।
स्वशाखोक्तविधानेनादौ वैदिकं समाचरेत् ॥ १३॥

ततः स्वमूलमन्त्रेण युक्तं तान्त्रिकमाचरेत् ।
स शुद्धः सर्वकर्मार्हो भवते देवतासमः ॥ १४॥

एवं गृत्समदः सर्वं चकार राजसत्तम ।
गणेशप्रीतिकामार्थं भक्तियुक्तो महामुनिः ॥ १५॥

शुचिवस्त्रे तथा गृह्य सन्ध्यां चकार वैदिकीम् ।
तत आगमसम्भूतां गाणेशीं सर्वसिद्धिदाम् ॥ १६॥

तत्राचमनकं प्रोक्तं त्रिविधं विबुधोत्तमैः ।
वैदिकं तान्त्रिकं पौराणिकं चैव सुसिद्धिदम् ॥ १७॥

व्याहृत्या वैदिकं प्रोक्तं मूलमन्त्रेण तान्त्रिकम् ।
पौराणिकं चतुर्थ्यन्तं तं गणेशनामसंयुतम् ॥ १८॥

तत्र पौराणिकं वक्ष्ये महत् शुचिकरं शृणु ।
यथा गृत्समदो विप्रेन्द्रश्चकार महायशाः ॥ १९॥

गणेशो ढुण्ढिराजश्च हेरम्बो वक्रतुण्डकः ।
शूर्पकर्णश्च विघ्नेशश्चिन्तामणिर्गजाननः ॥ २०॥

लम्बोदरश्चैकदन्तो ब्रह्मणस्पतिरेव च ।
विनायको ज्येष्ठराजो विकटः कपिलस्तथा ॥ २१॥

धरणीधर आशापूरको महोदरस्तथा ।
धूम्रकेतुर्मयूरेशः स्वानन्दवासकारकः ॥ २२॥

त्रिभिराचम्य हस्तौ वै द्वाभ्यां सङ्क्षालयेन्नरः ।
द्वाभ्यामोष्ठौ सम्पुटं चैकेन वै संस्पृशंस्ततः ॥ २३॥

पादौ तथैव नाम्ना वै शिरश्च चिबुकं नृप ।
द्वाभ्यां दक्षिणवामे तु नासिके संस्पृशेत्ततः ॥ २४॥

द्वाभ्यां नेत्रे तथा कर्णौ नाभिं चैकेन हृत्तथा ।
ललाटमेकनाम्ना तु बाहू चैकेन संस्पृशेत् ॥ २५॥

जलयुक्तेन नाम्ना यो नरश्चैवं समाचरेत् ।
आचमनं भवेत् साक्षाद्गणेशो भूमिमण्डले ॥ २६॥

(Page खं. ५ अ. ३८ पान ८८)
ततो न्यासादिकं कुर्यात् कलशस्थापनं चरेत् ।
पीठपूजां ततः कृत्वा मन्त्रन्यासं समाचरेत् ॥ २७॥

आगमोक्तेन मार्गेण मुनिर्गृत्समदो महान् ।
चकार सकलं राजन् देवतुल्योऽपि नित्यशः ॥ २८॥

ध्यात्वा गजाननं चित्ते पूजां चक्रे स मानसीम् ।
स्थिरचित्तेन योगीशो गणेशस्य विधानवित् ॥ २९॥

मानस्यां स्थिरचित्तत्वं कारणं परमं मतम् ।
न वर्णाश्रमभागश्च वर्तते नृपसत्तम ॥ ३०॥

वर्णाश्रमयुतानां चात्रावर्णाश्रमरूपिणाम् ।
अधिकारः सदा शास्त्रे वर्तते स्थिरचेतसाम् ॥ ३१॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे

पञ्चमे खण्डे लम्बोदरचरिते गृत्समदनित्यकर्मवर्णनं नाम सप्तत्रिंशत्तमोऽध्यायः ॥
५.३७

## ५.३८ गृत्समदप्रोक्तमानसपूजाकथनं नामाष्टत्रिंशत्तमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

गृत्समद उवाच ।
विघ्नेश वीर्याणि विचित्रकाणि सुमागधैर्बन्दिजनैः स्मृतानि ।
श्रुत्वा समुत्तिष्ठ गजानन त्वं ब्राह्मे जगन्मङ्गलगं कुरुष्व ॥ १॥

एवं मया प्रार्थितविघ्नराजश्चित्तेन चोत्थाय बहिर्गणेशः ।
तं निर्गतं वीक्ष्य नमन्ति देवाः शम्भ्वादयो योगिमुखास्तथाऽहम् ॥ २॥

शौचादिकं ते परिकल्पयामि हेरम्ब वै दन्तविशुद्धिमेवम् ।
वस्त्रेण सम्प्रोञ्छ्य मुखारविन्दं देवं सभायां विनिवेशयामि ॥ ३॥

द्विजादिसर्वैरभिवन्दितं च शुकादिभिर्मोदसुमोदकाद्यैः ।
सम्भाष्य चालोक्य समुत्थितं तं सुमण्डपं कल्प्य निवेशयामि ॥ ४॥

रत्नैः सुदीप्तैः प्रतिबिम्बितं तं पश्यामि चित्तेन विनायकं च ।
तत्रासनं रत्नसुवर्णयुक्तं सङ्कल्प्य देवं विनिवेशयामि ॥ ५॥

सिद्ध्या च बुद्ध्या सह विघ्नराज पाद्यं कुरु प्रेमभरेण सर्वैः ।
तोयं सुवासैं रचितं गृहाण चित्तेन दत्तं च सुखोष्णभावम् ॥ ६॥

शुद्धेन वस्त्रेण गणेश पादौ सम्प्रोञ्छ्य दूर्वादिभिरर्चयामि ।
चित्तेन भावप्रिय दीनबन्धो चित्तं विलीनं कुरु ते पदाब्जे ॥ ७॥

कर्पूरकैलादिसुवासितं तु सुकल्पितं तोयमथो गृहाण ।
आचम्य तेनैव गजानन त्वं कृपाकटाक्षेण विलोकयाऽऽशु ॥ ८॥

प्रवालमुक्ताफलहारकाद्यैः सुसंस्कृतं ह्यन्तरभावकेन ।
अनर्घ्यमर्घ्यं सफलं कुरुष्व मया प्रदत्तं गणराज ढुण्ढे ॥ ९॥

शुद्धं त्रियुक्तं मधुपर्कमाद्यं सङ्कल्पितं भावयुतं गृहाण ।
तोयेन चाचम्य विनायक त्वं भक्तांश्च भक्तेश सुरक्षयाशु ॥ १०॥

द्रव्यैर्युतं चम्पकजातिकाद्यैः तैलं मया कल्पितमेव ढुण्ढे ।
दत्तं गृहाणाऽऽशु विमर्दयामि सर्वाङ्गमानन्दद सेवनाय ॥ ११॥

(Page खं. ५ अ. ३८ पान ८९)
देवं सुखोष्णेन जलेन चाऽहं सर्वाद्यतीर्थाहृतकेन ढुण्ढिम् ।
चित्तेन शुद्धेन च स्नापयामि स्नानं मया दत्तमथो गृहाण ॥ १२॥

ततः पयःस्नानमचिन्त्यभाव गृहाण तोयस्य तथा गणेश ।
पुनर्दधिस्नानमनामय त्वं प्रकल्पितं नाथ जलस्य चाथ ॥ १३॥

ततो घृतस्नानमपारवन्द्य सुतीर्थजं विघ्नहर प्रसीद ।
गृहाण चित्तेन सुकल्पितं तु ततो मधुस्नानमथो जलस्य ॥ १४॥

सुशर्करायुक्तमथो गृहाण स्नानं मया कल्पितमेव ढुण्ढे ।
ततो जलस्नानमघापहन्तर्गणेश मायाभ्रमवारणाशु ॥ १५॥

सुयक्षपङ्कस्थमथो गृहाण स्नानं परेशाधिपते ततश्च ।
कमण्डलौ सम्भवजं कुरुष्व स्नानं विशुद्धं परिकल्पितं ते ॥ १६॥

दुग्धेन सूक्तैर्मनसा सुतीर्थैः सम्पूज्य दूर्वादिभिरल्पभावैः ।
सङ्घातिगैर्मण्डलभूतब्राह्मणस्पत्यकैस्त्वामभिषेचयामि ॥ १७॥

ततः सुवस्त्रेण तु प्रोञ्छनं त्वं गृहाण चित्तेन मया सुकल्पितम् ।
ततो विशुद्धेन जलेन चाचान्तमेव ढुण्ढे कुरु विघ्नराज ॥ १८॥

अग्नौ विशुद्धे प्रगृहाण वस्त्रे मौल्यातिगे ते मनसा मया वै ।
दत्ते परिच्छाद्य निजात्मदेहं ताभ्यां मयूरेश जनांश्च पालय ॥ १९॥

आचम्य विघ्नेश पुनस्त्वमेवं चित्तेन दत्तं सुखमुत्तरीयम् ।
भक्त्या गृहाण प्रतिपालयाऽऽशु नभो यथा तारकसंयुतं किम् ॥ २०॥

यज्ञोपवीतं त्रिगुणस्वरूपं सौवर्णमेवं ह्यहिनाथभूतम् ।
भावेन दत्तं गणनाथ तत्त्वं सौत्रं गृहाणोद्धृतिकारणाय ॥ २१॥

आचान्तमेवं मनसा कुरुष्व दत्तं मया तीर्थजलेन ढुण्ढे ।
भावेन कामण्डलवेन पाहि विश्वं प्रभो खेलकृतं सदा ते ॥ २२॥

उद्यद्दिनेशाभमथो गृहाण सिन्दूरकं ते मनसा प्रदत्तम् ।
सर्वाङ्गसंलेपनमादरात्त्वं हेरम्ब चित्तेन कुरुष्व पूर्णम् ॥ २३॥

साहस्रशीर्षं मनसा मया त्वं दत्तं किरीटं तु सुवर्णजं वै ।
अनन्तरत्नैः खचितं गृहाण ब्रह्मेश ते मस्तकशोभनाय ॥ २४॥

विचित्ररत्नैः कनकेन ढुण्ढे युतानि चित्तेन मया परेश ।

दत्तानि नानापदकुण्डलानि गृहाण शूर्पश्रुतिभूषणाय ॥ २५॥

शुण्डाविभूषार्थमनन्तखेलिन् सुवर्णजं कञ्चुकमागृहाण ।
रत्नैश्च युक्तं मनसा मया यद्दत्तं प्रभो तत् सफलं कुरुष्व ॥ २६॥

सुवर्णरत्नैश्च युतानि सम्प्रकल्प्यैकदन्ताभरणानि ढुण्ढे ।
गृहाण चूडाकृतिनी परेश समर्पिते ते रदशोभनार्थम् ॥ २७॥

रत्नैः सुवर्णेन कृतानि यानि चत्वारिसङ्कल्प्य गृहाण तानि ।
सम्भूषय त्वं कटकानि नाथ चतुर्भुजेषु ह्यज विघ्नहारिन् ॥ २८॥

विचित्ररत्नैः खचितं सुवर्णसम्भूतकं गृह्य मया प्रदत्तम् ।
तथाङ्गुलिष्वेव यदङ्गुलीयं गणेश संशोभय तत्परेश ॥ २९॥

रत्नैर्विचित्रैः खचितानि ढुण्ढे केयूरकाणि ह्यथ कल्पितानि ।
सुवर्णजानि प्रमथाधिनाथ गृहाण दत्तानि तु बाहुषु त्वम् ॥ ३०॥

प्रवालमुक्ताफलरत्नजास्त्वं सौवर्णसूत्रैश्च गृहाण कण्ठे ।
चित्तेन दत्ता विविधाश्च माला हृद्योदरे शोभय विघ्नराज ॥ ३१॥

(Page खं. ५ अ. ३८ पान ९०)
चन्द्रं ललाटे गणनाथ पूर्णं वृद्धिक्षयाभ्यां तु विहीनमाद्यम् ।
संशोभय त्वं वरसंयुतं ते भक्तिप्रियत्वं प्रकटीकुरुष्व ॥ ३२॥

चिन्तामणिं चिन्तितदं परेश हृद्देशगं कान्तिमयं कुरुष्व ।
मणिं सदानन्दसुखप्रदं च विघ्नेश दीनानथ पालयस्व ॥ ३३॥

नाभौ फणीशं च सहस्रशीर्षं संवेष्टनैव गणाधिनाथ ।
भक्तं सुभूषं कुरु भूषणेन दत्तं वरं तं सफलं परेश ॥ ३४॥

देशे कटौ रत्नसुवर्णयुक्तां काञ्चीं सुचित्तेन च धारयामि ।
विघ्नेश ज्योतिर्गणदीपिनीं ते पाहि प्रभक्तं कुरु मां दयाब्धे ॥ ३५॥

गणेश ते रत्नसुवर्णयुक्ते मञ्जीरके नूपुरके तथैव ।
सुकिङ्किणीनादयुते सुबुद्ध्या सुपादयोः शोभय मे प्रदत्ते ॥ ३६॥

इत्यादि नानाविधभूषणानि भक्तेच्छया मानसकल्पितानि ।
सुभूषयाम्येव तवाङ्गकेषु रत्नादिधातुप्रभवाणि ढुण्ढे ॥ ३७॥

सुचन्दनं रक्तममोघवीर्यं सुघर्षितं ह्यष्टसुगन्धमुख्यैः ।
मया युतं कल्पितमेकदन्त गृहाण ते त्वङ्गविलेपनार्थम् ॥ ३८॥

लिप्तेषु वैचित्र्यमथाष्टगन्धैरङ्गेषु तेऽहं प्रकरोमि चित्रम् ।
मां पाहि चित्तेन विनायक त्वं रक्तं ततो वर्तुलमेव भाले ॥ ३९॥

आज्येन वै कुङ्कुमकेन रक्तान् सूक्ष्माक्षतांस्ते परिकल्पयामि ।
भाले गणाध्यक्ष गृहाण पाहि भक्तान् सुभक्तिप्रिय दीनबन्धो ॥ ४०॥

गृहाण भोश्चम्पकमालतीस्थलपङ्कजान्यम्बुजपङ्कजानि ।
मया प्रदत्तानि च मल्लिकाश्च गणेश पुष्पाणि च रक्तकानि ॥ ४१॥

पुष्पोपरि त्वं मनसा गृहाण हेरम्ब मन्दारशमीदलानि ।
दत्तानि चित्तेन सुकल्पितानि सङ्ख्यातिगानि प्रणवाकृते ते ॥ ४२॥

दूर्वाङ्कुरान् वै मनसा प्रदत्तान् पञ्चत्रिपत्रान्वितकार्द्रभूतान् ।
श्वेतांश्च विघ्नेश्वर सङ्ख्या त्वं हीनांश्च सर्वोपरि सङ्गृहाण ॥ ४३॥

दशाङ्गभूतं मनसा मया ते धूपं प्रदत्तं गणराज चाग्नौ ।
मां पाहि सौरभ्यकरं परेश सिद्ध्या च बुद्ध्या सह सङ्गृहाण ॥ ४४॥

दीपं सुवर्त्यायुतमादरात्ते दत्तं मया मानसकं गृहाण ।
विघ्नेश कर्पूरभवं गृहाण तैलादिसम्भूतममोघदृष्टे ॥ ४५॥

भोज्यं तु लेह्यं गणराज पेयं चोष्यं च नानाविधषड्रसाढ्यम् ।
हेरम्ब नैवेद्यमथो गृहाण सङ्कल्पितं पुष्टिपते ह्यपारम् ॥ ४६॥

सुवासितं भोजनमध्यभागे जलं मया दत्तमथो गृहाण ।
सदात्मतीर्थं मनसा गणेश पिबस्व विश्वादिकतृप्तिकारिन् ॥ ४७॥

ततः करोद्वर्तनकं गृहाण सुगन्धयुक्तं मुखमार्जनाय ।
सुवासितेनैव सुतीर्थजेन सुकल्पितं भक्तियुतं च ढुण्ढे ॥ ४८॥

आचम्य सर्वेश सुवासितं च दत्तं मया तीर्थजलं पिबस्व ।
सङ्कल्प्य विघ्नेश ततः परं ते सम्प्रोञ्छनं हस्तमुखे करोमि ॥ ४९॥

द्राक्षादिरम्भाफलचूतकानि खर्जूरकर्कन्धुकदाडिमानि ।
स्वादेन युक्तानि मया गृहाण सङ्कल्प्य दत्तानि फलानि ढुण्ढे ॥ ५०॥

पुनर्जलेनैव करादिकं क्षालयामि तेऽहं मनसा गणेश ।
सुवासितं तोयमथो पिबस्व मया प्रदत्तं मनसा परेश ॥ ५१॥

अष्टाङ्गयुक्तं गणनाथ दत्तं ताम्बूलकं ते मनसा मया वै ।

(Page खं. ५ अ. ३८ पान ९१)
सुकल्प्य विघ्नेश्वर सङ्गृहाण नाथासकृत्तुण्डविशोधनार्थम् ॥ ५२॥

ततो मया कल्पितके गणेश महासने रत्नसुवर्णयुक्ते ।
शमीशकार्पासकयुक्तवस्त्रैरनर्घ्यसञ्छादितके प्रसीद ॥ ५३॥

भक्त्या त्वदीयावरणं परेश सम्पूजयामि मनसा यथावत् ।
नानोपचारैः परमप्रियैस्तु त्वत्प्रीतिकामार्थमनाथबन्धो ॥ ५४॥

गृहाण लम्बोदर दक्षिणां तामसङ्ख्यभूतां मनसा प्रदत्ताम् ।
सुवर्णरत्नादिकमुख्यभूतां प्रभो जगत्कृत्स्नमिदं सुपाहि ॥ ५५॥

राजोपचारान्विविधान् गृहाण छत्राश्वहस्त्यादिकमादराद्वै ।
चित्तेन दत्तान् गणनाथ ढुण्ढे ह्यपारसङ्ख्यान् स्थिरजङ्गमांस्ते ॥ ५६॥

दानस्य नानाविधरूपकांस्ते दत्तान् मया वै मनसा गृहाण ।
गोभूमिकाद्यान् स्थिरजङ्गमांश्च हेरम्ब मां तारय मोहभावात् ॥ ५७॥

मन्दारपुष्पाणि शमीदलानि दूर्वाङ्कुरांस्ते मनसा ददामि ।
हेरम्ब लम्बोदर दीनपाल सङ्गृह्य भक्तं कुरु मां पदस्ते ॥ ५८॥

ततो हरिद्रामबिरं गुलालं सिन्दूरकं ते परिकल्पयामि ।
सुवासितं वस्तु सुवासभूतैर्गृहाण ब्रह्मेश्वर शोभनार्थम् ॥ ५९॥

ततः शुकाद्याः शिवविष्णुमुख्यामराधिपाः शेषमुखास्तथान्ये ।
मुनीन्द्रकाः सेवकभावयुक्ताः सभासनस्थं प्रणमन्ति ढुण्ढिम् ॥ ६०॥

वामाङ्गके भक्तियुता गणेशं सिद्धिश्च नानाविधसिद्धिभिस्तम् ।
अत्यन्तभावेन सुसेवते तु मायास्वरूपा परमार्थभूता ॥ ६१॥

ब्रह्मेश्वरं दक्षिणभागसंस्था बुद्धिः कलाभिश्च सुबोधिकाभिः ।
विद्याभिरेवं भजते परेशा माया सुसाङ्ख्यप्रदचित्तरूपा ॥ ६२॥

प्रमोदमुख्याः प्रभुपृष्ठभागे गणेश्वरं भावयुता भजन्ते ।
भक्तेश्वरा मुद्गलशम्भुमुख्याः शुकादयस्तं स्म पुरो भजन्ते ॥ ६३॥

गन्धर्वमुख्या मधुरं जगुश्च विश्वेशगीतं विविधस्वरूपम् ।
नृत्यं कलायुक्तमथो पुरस्ताच्चक्रुस्तथा ह्यप्सरसो विचित्रम् ॥ ६४॥

इत्यादि नानाविधभावयुक्तैः संसेवितं विघ्नपतिं भजामि ।
चित्तेन ध्यात्वा तु नीराजनं वै करोमि नानाविधदीपयुक्तम् ॥ ६५॥

चतुर्भुजं पाशधरं गणेशं तथांऽकुशं वै दधतं च दन्तम् ।
त्रिनेत्रयुक्तं ह्यभयन्धरं तं महोदरं चैकरदं गजास्यम् ॥ ६६॥

सर्पोपवीतं गजकर्णधारं विभूतिभिः सेवितपादपद्मम् ।
ध्याये गणेशं विविधप्रकारैः सम्पूजितं शक्तियुतं परेशम् ॥ ६७॥

ततो जपं वै मनसा करोमि स्वमूलमन्त्रस्य विधानयुक्तम् ।
असङ्ख्यभूतं गणराजहस्ते समर्पयाम्येव गृहाण ढुण्ढे ॥ ६८॥

आरार्तिकं त्वेतदपारदीपं कर्पूरभूतं प्रकरोमि पूर्णम् ।
चित्तेन लम्बोदर तत् गृहाण ह्यज्ञानध्वान्ताघहरं निजानाम् ॥ ६९॥

गणेश वैघ्नेश्वरकैः सुमन्त्रैः सुमन्त्रितं पुष्पदलप्रभूतम् ।
गृहाण चित्तेन मया प्रदत्तमपारवृत्त्या त्वथ मन्त्रपुष्पम् ॥ ७०॥

अनन्तवृत्त्या स्तुतिमेकदन्त विघ्नेश चित्तेन कृतां गृहाण ।
युक्तां श्रुतिस्मार्तभवैः पुराणैः सर्वैः परेशाधिपते मया वै ॥ ७१॥

प्रदक्षिणा मानसकल्पितास्ता गृहाण लम्बोदर भावयुक्ताः ।
(Page खं. ५ अ. ३८ पान ९२)
असङ्ख्यभूता विविधस्वरूपा दासान् सदा रक्ष भवार्णवाद्वै ॥ ७२॥

नतिं ततो विघ्नपते गृहाण साष्टाङ्गकाद्यां विविधस्वरूपाम् ।
सङ्ख्याविहीनां मनसा कृतां ते सिध्या च बुध्या परिपालयाशु ॥ ७३॥

न्यूनातिरिक्तं तु मया कृतं चेदं ते तदर्थं मनसा गृहाण ।
दूर्वाङ्कुरान् विघ्नपते प्रदत्तान् सम्पूर्णमेवं कुरु पूजनं मे ॥ ७४॥

क्षमस्व विघ्नाधिपते मदीयान् सदाऽपराधान् विविधस्वरूपान् ।
मदीयभक्तिं सफलां कुरुष्व सम्प्रार्थयेऽहं मनसा गणेश ॥ ७५॥

मह्यं प्रसन्नेन गजाननेन दत्तं प्रसादं च शिरोभिवन्द्यम् ।
स्वमस्तके तं परिधारयामि चित्तेन विघ्नेश्वरमानतोऽस्मि ॥ ७६॥

गणेश उत्थाय सभां विहाय गतस्ततस्त्वन्तरधामशक्तया ।
शिवादयस्तं प्रणिपत्य सर्वे गताः सुचित्तेन च चिन्तयामि ॥ ७७॥

सर्वान्नमस्कृत्य ततो भजामि चित्तेन भक्त्या च गणाधिपं तम् ।
स्वस्थानमागत्य महानुभावैर्भक्तैर्गणेशस्य च खेलयामि ॥ ७८॥

एवं त्रिकालेषु गणाधिपं तं चित्तेन नित्यं परिपूजयामि ।
तेनैव तुष्टः प्रददातु भावं विघ्नेश्वरो भक्तिमयं महान्तम् ॥ ७९॥

विघ्नेशपादोदकपानकं मे तत्त्यक्तगन्धस्य सुलेपनं तु ।
निर्माल्यसन्धारणकं सुभोज्यं लम्बोदरस्यास्तु हि भुक्तशेषम् ॥ ८०॥

करोमि यद्यच्च तदेव दीक्षा गणेश्वरस्यास्तु सदा परेश ।
प्रसीद नित्यं तव पादभक्तं कुरुष्व मां ब्रह्मपते दयालो ॥ ८१॥

शय्यामनर्घां परिकल्पयामि मन्दारकार्पासकवस्त्रयुक्ताम् ।
नानासुपुष्पादिभिरर्चितां ते विघ्नेश निद्रां कुरु सङ्गृहाण ॥ ८२॥

सिद्ध्या च बुद्ध्या सहितं गणेशं सुनिद्रितं वीक्ष्य तथाऽहमेव ।
गत्वा स्ववासं च करोमि निद्रां ध्यात्वा हृदि ब्रह्मपतिं तदीयः ॥ ८३॥

एतादृशं सौख्यममोघशक्ते देहीश यन् मानसजं गणेश ।
मह्यं च तेनैव कृतार्थरूपो भवामि भक्ते रसलालसोऽहम् ॥ ८४॥

गार्ग्य उवाच ।
एवं नित्यं महाराज गृत्समदो महायशाः ।
चकार मानसीं पूजां योगीन्द्राणां गुरुः स्वयम् ॥ ८५॥

य एतां मानसीं पूजां करिष्यति नरोत्तमः ।
पठिष्यति सदा सोऽपि गाणपत्यो भविष्यति ॥ ८६॥

श्रावयिष्यति यो मर्त्यः श्रोष्यते भावसंयुतः ।
स क्रमेण महीपाल ब्रह्मभूतो भविष्यति ॥ ८७॥

यद्यदिच्छति तत्तद्वै सफलं तस्य जायते ।
अन्ते स्वानन्दगः सोऽपि योगिवन्द्यो भविष्यति ॥ ८८॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पञ्चमे खण्डे लम्बोदरचरिते गृत्समदप्रोक्तमानसपूजाकथनं नामाष्टत्रिंशत्तमोऽध्यायः ॥ ५.३८

(Page खं. ५ अ. ३९ पान ९३)

## ५.३९ गृत्समदप्रोक्तबाह्यपूजावर्णनं नामैकोनचत्वारिंशत्तमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

ऐल उवाच ।
बाह्यां पूजां गृत्समदकीर्तितां वद मे विभो ।
तेन मार्गेण विघ्नेशं भजिष्यामि निरन्तरम् ॥ १॥

गार्ग्य उवाच ।
आदौ च मानसीं पूजां कृत्वा गृत्समदो मुनिः ।
चकार विधिवद्बाह्यां तां शृणुष्व सुखप्रदाम् ॥ २॥

हृदि ध्यात्वा गणेशानं परिवारादिसंयुतम् ।
नासिकारन्ध्रमार्गेण बाह्यगं तं चकार सः ॥ ३॥

आदौ वैदिकमन्त्रं स गणानां त्वेति सम्पठन् ।
पश्चात् श्लोकं समुच्चार्य पूजयामास विघ्नपम् ॥ ४॥

गृत्समद उवाच ।
चतुर्बाहुं त्रिनेत्रं च गजास्यं रक्तवर्णकम् ।
पाशाङ्कुशादिसंयुक्तं मायायुक्तं प्रचिन्तये ॥ ५॥

आगच्छ ब्रह्मणां नाथ सुरासुरवरार्चित ।
सिद्धिबुद्ध्यादिसंयुक्त भक्तिग्रहणलालस ॥ ६॥

कृतार्थोऽहं कृतार्थोऽहं तवागमनतः प्रभो ।
विघ्नेशानुगृहीतोऽहं सफलो मे भवो भवेत् ॥ ७॥

रत्नसिंहासनं स्वामिन् गृहाण गणनायक ।
तत्रोपविश्य विघ्नेश रक्ष भक्तान् विशेषतः ॥ ८॥

सुवासिताभिरद्भिश्च पादप्रक्षालनं प्रभो ।
शीतोष्णाभिस्ते करोमि गृहाण पाद्यमुत्तमम् ॥ ९॥

सर्वतीर्थाहृतं तोयं सुवासितं सुवस्तुभिः ।
आचमनं च तेनैव कुरुष्व गणनायक ॥ १०॥

रत्नप्रवालमुक्ताद्यैरनर्घैः संस्कृतं प्रभो ।
अर्घ्यं गृहाण हेरम्ब द्विरदानन तोषकम् ॥ ११॥

दधिमधुघृतैर्युक्तं मधुपर्कं गजानन ।
गृहाण भावसंयुक्तं मया दत्तं नमोऽस्तु ते ॥ १२॥

पाद्ये च मधुपर्के च स्नाने वस्त्रोपधारणे ।

उपवीते भोजनान्ते पुनराचमनं कुरु ॥ १३॥

चम्पकाद्यैर्गणाध्यक्ष वासितं तैलमुत्तमम् ।
अभ्यङ्गं कुरु सर्वेश लम्बोदर नमोऽस्तु ते ॥ १४॥

यक्षकर्दमकाद्यैश्च विघ्नेश भक्तवत्सल ।
उद्वर्तनं कुरुष्व तं मया दत्तैर्महाप्रभो ॥ १५॥

नानातीर्थजलैर्ढुण्ढे सुखोष्णभावरूपकैः ।
कमण्डलूद्भवैः स्नानं मया कुरु समर्पितैः ॥ १६॥

कामधेनुसमुद्भूतं पयः परमपावनम् ।
तेन स्नानं कुरुष्व त्वं हेरम्ब परमार्थवित् ॥ १७॥

पञ्चामृतस्य मध्ये तु जलस्नानं पुनः पुनः ।
कुरु त्वं सर्वतीर्थेन ब्रह्मकमण्डलूद्भवैः ॥ १८॥

दधिधेनुपयोभूतं मलापहरणं परम् ।
गृहाण स्नानकार्यार्थं विनायक दयानिधे ॥ १९॥

सन्तोषकारकं ढुण्ढे घृतं धेनुसमुद्भवम् ।
महामलापघातार्थं तेन स्नानं कुरुष्व भोः ॥ २०॥

पूर्णं मधुरसोद्भूतं सरघासंस्कृतं मधु ।
गृहाण स्नानकार्यार्थं विनायक नमोऽस्तु ते ॥ २१॥

इक्षो रससमुद्भूतां शर्करां मलनाशिनीम् ।
गृहाण गणनाथ त्वं तया स्नानं समाचर ॥ २२॥

यक्षकर्दमकाद्यैश्च स्नानं कुरु गणेश्वर ।
आन्त्यं मलहरं शुद्धं सर्वसौगन्ध्यकारकम् ॥ २३॥

ततो गन्धाक्षतादीन् दूर्वां कुरांश्च गजानन ।
समर्पयामि स्वल्पांस्त्वं गृहाण परमेश्वर ॥ २४॥

ब्राह्मणस्पत्यसूक्तैश्च ह्येकविंशतिवारकैः ।
अभिषेकं ते करोमि गृहाण द्विरदानन ॥ २५॥

तीर्थैराचमनं देव सुवस्त्वभिसुवासितैः ।
कुरुष्व गणनाथ त्वं सर्वतीर्थभवेन वै ॥ २६॥

(Page खं. ५ अ. ३९ पान ९४)
वस्त्रयुग्मे गृहाण त्वमनर्घे रक्तवर्णके ।
लोकलज्जाहरायैव विघ्नराज नमोऽस्तु ते ॥ २७॥

उत्तरीयं सुचित्रं ते नभस्ताराङ्कितं यथा ।
गृहाण सर्वसिद्धीश मया दत्तं सुभक्तितः ॥ २८॥

उपवीतं गणाध्यक्ष गृहाण त्वं ततः परम् ।
त्रैगुण्यमयरूपं तु प्रणवग्रन्थिबन्धनम् ॥ २९॥

ततः सिन्दूरकं देव गृहाण गणनायक ।
अङ्गलेपनभावार्थं सदानन्दविवर्धन ॥ ३०॥

भूषणानि विचित्राणि सर्वाङ्गे भूषणाय ते ।
सुवर्णरत्नकाद्यैश्च निर्मितानि गृहाण भोः ॥ ३१॥

अष्टगन्धं समायुक्तं गन्धं रक्तं गजानन ।
द्वादशाङ्गेषु ते ढुण्ढे लेपयामि सुचित्रवत् ॥ ३२॥

रक्तचन्दनसंयुक्तानथवा कुङ्कुमैर्युतान् ।
गणराज गृहाण त्वमक्षतान् भालमण्डले ॥ ३३॥

कह्लारचम्पकादीनि रक्तानि च गजानन ।
पुष्पाणि शमीमन्दारदूर्वादीनि गृहाण च ॥ ३४॥

दशाङ्गं गुग्गुलुं धूपं सर्वसौरभकारकम् ।
गृहाण त्वं मया दत्तं विनायक महोदर ॥ ३५॥

नानाजातिभवं दीपं गृहाण गणनायक ।
अज्ञानं मानसं दोषं हरन्तं ज्योतिरात्मकम् ॥ ३६॥

चतुर्विधान्नसम्पन्नं मधुरं लड्डुकादिकम् ।
नैवेद्यं ते मया दत्तं भोजनं कुरु विघ्नप ॥ ३७॥

सुवासितं गृहाणेदं जलं तीर्थसमाहृतम् ।
भुक्तिमध्ये च पानार्थं देवदेवेश ते नमः ॥ ३८॥

भोजनान्ते करोद्वर्तं यक्षकर्दमकेन च ।
कुरुष्व त्वं गणाध्यक्ष पिब तोयं सुवासितम् ॥ ३९॥

खर्जूरं दाडिमं द्राक्षां रम्भादीनि फलानि वै ।

गृहाण देवदेवेश नानामधुरकाणि तु ॥ ४० ॥

अष्टाङ्गं देव ताम्बूलं गृहाण मुखवासनम् ।
असकृद्विघ्नराज त्वं मया दत्तं विशेषतः ॥ ४१ ॥

दक्षिणां काञ्चनाद्यां तु नानाधातुसमुद्भवाम् ।
रत्नाद्यैः संयुतां ढुण्ढे गृहाण सकलप्रिय ॥ ४२ ॥

राजोपचारकाद्यानि गृहाण गणनायक ।
दानानि तु विचित्राणि मया दत्तानि विघ्नप ॥ ४३ ॥

तत आवरणं तेऽद्य पूजयामि विधानतः ।
उपचारैश्च विविधैस्तेन तुष्टो भव प्रभो ॥ ४४ ॥

ततो दूर्वाङ्कुरान् ढुण्ढे एकविंशतिसङ्ख्यकान् ।
गृहाण न्यूनसिद्ध्यर्थं भक्तवात्सल्यकारणात् ॥ ४५ ॥

नानादीपसमायुक्तं नीराजनं गजानन ।
गृहाण भावसंयुक्तं सर्वाज्ञानविनाशन ॥ ४६ ॥

गणानां त्वेति मन्त्रस्य जपं साहस्त्रकं परम् ।
गृहाण गणनाथ त्वं सर्वसिद्धिप्रदो भव ॥ ४७ ॥

कर्पूराद्यां महार्तिं च नानादीपमयीं प्रभो ।
गृहाण ज्योतिषां नाथ तया नीराजयाम्यहम् ॥ ४८ ॥

पादयोस्ते तु चत्वारि नाभौ द्वे वदने प्रभो ।
एकं तु सप्तवारं वै सर्वाङ्गेषु नीराजनम् ॥ ४९ ॥

चतुर्वेदभवैर्मन्त्रैर्गाणपत्यैर्गजानन ।
मन्त्रितानि गृहाण त्वं पुष्पपत्राणि विघ्नप ॥ ५० ॥

गाणपत्यैः पञ्चविधमयैः स्तोत्रैर्गणाधिप ।
स्तौमि त्वां तेन सन्तुष्टो भव भक्तिप्रदायक ॥ ५१ ॥

एकविंशतिसङ्ख्याकां त्रिसङ्ख्यां वा गजानन ।
प्रदक्षिणां गृहाण त्वं ब्रह्मब्रह्मेशभावतः ॥ ५२ ॥

साष्टाङ्गां प्रणतिं नाथ एकविंशतिसम्मिताम् ।
हेरम्ब सर्वपूज्य त्वं गृहाण तु मया कृताम् ॥ ५३ ॥

(Page खं. ५ अ. ३९ पान ९५)
न्यूनातिरिक्तभावार्थं काञ्चित् दूर्वाङ्कुरान् प्रभो ।
समर्पयामि तेन त्वं साङ्गां पूजां कुरुष्व मे ॥ ५४॥

त्वया दत्तं स्वहस्तेन निर्माल्यं चिन्तयाम्यहम् ।
शिखायां धारयाम्येव सदा सर्वप्रदं च तत् ॥ ५५॥

अपराधानसङ्ख्यातान् क्षमस्व गणनायक ।
भक्तं कुरु च मां ढुण्ढे तव पादप्रियं सदा ॥ ५६॥

त्वं माता त्वं पिता त्वं वै सुहृत् सम्बन्धिकादयः ।
त्वमेव कुलदेवश्च सर्वं त्वं मे न संशयः ॥ ५७॥

जाग्रत्स्वप्नसुषुप्तिभिर्देहवाङ्मानसैः कृतम् ।
सांसर्गिकं च यत् कर्म गणेशाय समर्पये ॥ ५८॥

बाह्यं नानाविधं पापं महोग्रं तल्लयं व्रजेत् ।
गणेशपादतीर्थस्य मस्तके वन्दनात् किल ॥ ५९॥

पादोदकं गणेशस्य पीतं नरेण तत्क्षणात् ।
सर्वान्तर्गतजं पापं नश्यति गणनातिगम् ॥ ६०॥

गणेशोच्छिष्टगन्धं वै द्वादशाङ्गेषु योऽर्चयेत् ।
गणेशतुल्यरूपः स दर्शनात् सर्वपापहा ॥ ६१॥

यदि गणेशपूजादौ गन्धं भस्मादिकं चरेत् ।
गणेशोच्छिष्टगन्धं तु नोचेत्तत्र विधिं चरेत् ॥ ६२॥

द्वादशाङ्गेषु विघ्नेश नाममन्त्रेण चार्चयेत् ।
तेन सोऽपि गणेशस्य समो भवति भूतले ॥ ६३॥

गणेश्वरं मूर्ध्नि चादौ ललाटे विघ्ननायकम् ।
दक्षिणे कर्णमूले तु वक्रतुण्डं समर्चयेत् ॥ ६४॥

वामे कर्णस्य मूले वै चैकदन्तं समर्चयेत् ।
कण्ठे लम्बोदरं देवं हृदि चिन्तामणिं तथा ॥ ६५॥

बाहौ दक्षिणके चैव हेरम्बं वामबाहुके ।
विकटं नाभिदेशे तु विनायकं समर्चयेत् ॥ ६६॥

कुक्षौ दक्षिणभागे तु मयूरेशं समर्चयेत् ।

वामकुक्षौ गजास्यं वै पृष्ठे स्वानन्दवासिनम् ॥ ६७॥

सर्वाङ्गलेपनं शस्तं चित्रितं गन्धमष्टकैः ।
गाणेशानां विशेषेण सर्वभद्रस्य कारणात् ॥ ६८॥

भुक्तशेषं तु नैवेद्यं गणेशस्य भुनज्म्यहम् ।
भुक्तिमुक्तिप्रदं पूर्णं नानापापनिकृन्तनम् ॥ ६९॥

गणेशस्मरणेनैव करोमि कालखण्डनम् ।
गाणपत्यैश्च संवासो गजानन सदाऽस्तु मे ॥ ७०॥

गार्ग्य उवाच ।
एवं गृत्समदो विप्रश्चकार बाह्यपूजनम् ।
त्रिकालेषु महायोगी सदा भक्तिसमन्वितः ॥ ७१॥

तथा कुरु महीपाल गाणपत्यो भविष्यसि ।
यथा गृत्समदः साक्षात्तथा त्वमपि निश्चितम् ॥ ७२॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
पञ्चमे खण्डे लम्बोदरचरिते गृत्समदप्रोक्तबाह्यपूजावर्णनं नामैकोनचत्वारिंशत्तमोऽध्यायः
॥ ५.३९

(Page खं. ५ अ. ४० पान ९६)

## ५.४० स्वानन्दलोकवर्णनं नाम चत्वारिंशत्तमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

ऐल उवाच ।
श्रुत्वा गृत्समदस्यैव चरितं सर्वदायकम् ।
न तृप्तोऽहं महायोगिन् भवाम्यमृतपानवत् ॥ १॥

न गृत्समदतुल्यं तु पश्यामि ब्रह्मगोलके ।
धन्योऽयं योगिनां मध्ये गाणपत्येषु मानद ॥ २॥

अधुना वद योगीश गणेशलोकवर्णनम् ।
कीदृशोऽयं गणेशस्य निजलोको विशेषतः ॥ ३॥

गार्ग्य उवाच ।
अत्र ते कथयिष्यामि चेतिहासं पुरातनम् ।

मुद्गलस्य मुनेः संवादयुक्तं कपिलस्य वै ॥ ४॥

एकदा मुद्गलो योगी गाणपत्याग्रणीर्नृप ।
जगाम कपिलस्यैवाश्रमं गङ्गातटे स्थितम् ॥ ५॥

प्रणम्य स जगादापि कपिलं हर्षसंयुतः ।
कृत्वा करपुटं चाङ्गिरस आदौ वराग्रणीः ॥ ६॥

मुद्गल उवाच ।
साक्षाद्विष्णुस्वरूपस्त्वं शुक्ल सर्वार्थदायक ।
गाणपत्येषु मुख्यस्त्वं साङ्ख्यानां परमा गतिः ॥ ७॥

त्वद्दर्शनजपुण्येन कृतकृत्योऽहमञ्जसा ।
कुलं धन्यं यशो विद्या ज्ञानं मे तेऽद्य दर्शनात् ॥ ८॥

एवं वदन्तमत्यन्तं कपिलस्तं ननाम च ।
पूजयामास हर्षेण मुद्गलं भावभावितम् ॥ ९॥

ततस्तं कपिलो योगी जगाद वचनं हितम् ।
तात ते दर्शनेनाद्य पवित्रोऽहं च साम्प्रतम् ॥ १०॥

पूर्णभक्तस्त्वमेवैको गणेशस्य महामुने ।
साक्षान् मुद्गल शस्त्रेशो गाणेशो नात्र संशयः ॥ ११॥

यथा मुद्गरशस्त्रेण चूर्णयित्वा पदार्थकान् ।
नामरूपविहीनांश्च कुरुते मानवः परान् ॥ १२॥

तथा त्वया महायोगिंस्तपसा योगसेवया ।
अभिमानः समाचूर्ण्य कृतो मूलविवर्जितः ॥ १३॥

नानायोगिन एवं तं योगेन स्वाभिमानकम् ।
चूर्णयन्ति महाभाग तथापि हृदि तिष्ठति ॥ १४॥

तेन त्वं मुद्गलो योगी जगत्येको विनिश्चितम ।
वयं न तादृशा वत्स ह्येकमार्गसमाश्रयात् ॥ १५॥

त्वदीयकृत्याङ्गिरसं पुराणं सम्भविष्यति ।
सर्वेषां मान्यमेकं तद्योगप्रदं न संशयः ॥ १६॥

अभिमानेन युक्तानि पुराणानि विशेषतः ।
शास्त्राणि नात्र सन्देहः कारणं शृणु मुद्गल ॥ १७॥

ज्ञातं गुह्यं तत्तथापि सङ्गोप्य स्वमतं पुनः ।
स्थापयित्वा विशेषेणाञ्जसा तथ्यं वदन्ति ते ॥ १८॥

गणेशभक्तः संस्त्वं तु तथापि गणनायकम् ।
रहस्येन विशेषार्थं न करोषि कदाचन ॥ १९॥

त्वदीयं वचनं श्रेष्ठं सर्वमान्यं न संशयः ।
अभिमानेन हीनत्वाद्वेदगुह्यप्रकाशकम् ॥ २०॥

त्वया कृतं पुराणं यत्तदान्त्यं प्रभविष्यति ।
पुराणानां महत् श्रेष्ठं मुद्गलं मुद्गलाकृति ॥ २१॥

त्वयोक्तं निन्दयेद्यो वै भवेत् स निरयप्रदः ।
अन्येभ्यस्तु स्वयं मूर्खो नरकेषु पतिष्यति ॥ २२॥

वेदशास्त्रपुराणानां मुद्गलस्त्वत्कृतो महान् ।
ग्रन्थो भविष्यन् नूनं निरभिमानत्वकारणात् ॥ २३॥

न मुद्गलसमो योगी न मुद्गलसमः कदा ।
गाणपत्यो महायोगी त्रिकालेषु विनिश्चितम् ॥ २४॥

स्वागतं ते महाभाग स्थीयतां मे प्रसन्निधौ ।
त्वद्दर्शनेन संहृष्टो भवामि गणपप्रिय ॥ २५॥

(Page खं. ५ अ. ४० पान ९७)
कपिलेन महायोगी सत्कृतस्तत्र भूमिप ।
मुद्गलस्तत्र सान्निध्ये न्यवसद्भावसंयुतः ॥ २६॥

एकदा सुखमासीनं कपिलं योगिनां वरम् ।
पप्रच्छ मुद्गलो हर्षात् विनयावनतोऽभवत् ॥ २७॥

मुद्गल उवाच ।
स्वामिंस्त्वदीयगेहे स चिन्तामणिः समागतः ।
पुत्रभावेन साक्षात्तु ब्रह्मणां नायकः परः ॥ २८॥

त्वया भावेन सर्वेश आराधितो निरन्तरम् ।
गुह्यं तस्य त्वमेवेह जानास्यत्र न संशयः ॥ २९॥

न त्वत्समो महासिद्धः साक्षाद्विष्णुस्त्वमञ्जसा ।

गाणपत्यः स्वयं योगी गणेशजनकः पुनः ॥ ३०॥

परिपृच्छाम्यतस्त्वाहं वद सर्वं महाप्रभो ।
भवादृशा जनानां तु तारणाय भवन्ति हि ॥ ३१॥

स्वानन्दवसतिः स्वामिन् कीदृशी तत्र किं सुखम् ।
विस्तारः कीदृशस्तस्याः केन योगेन लभ्यते ॥ ३२॥

न कोऽपि तस्य लोकस्य जानाति त्वदृते परम् ।
रहस्यं वद सर्वेश गाणपत्यस्य विस्तरात् ॥ ३३॥

गार्ग्य उवाच ।
एवं पृष्टो महासिद्धस्तं प्रहस्य प्रशंसयन् ।
जगाद कपिलो हर्षाद्गाणपत्याग्रणीर्वचः ॥ ३४॥

कपिल उवाच ।
शृणु मुद्गल माहात्म्यं सङ्क्षेपेण ब्रवीम्यहम् ।
स्वानन्दलोकगं पूर्णं सारं सर्वत्र सम्मतम् ॥ ३५॥

गणासुरं गणाध्यक्षो हत्वा परमदुर्जयम् ।
गन्तुं समुद्यतस्तत्र निजलोके यदाऽभवत् ॥ ३६॥

ततो मयाऽतिभक्त्या वै प्रार्थितो गणनायकः ।
उवाच मां वरं योगिन् वृणु दास्यामि मानद ॥ ३७॥

ततश्चिन्तामणिं विप्र प्रणम्योचेऽतिदुःखितः ।
वद स्वानन्दलोकस्य माहात्म्यं गणनायक ॥ ३८॥

नानालोकाः श्रुताः स्वामिन् न स्वानन्दं गजानन ।
जानाति कोऽपि यत्र त्वं प्रभो वससि नित्यदा ॥ ३९॥

चिन्तामणिरुवाच ।
स्वानन्दं यच्च वेदेषु ब्रह्म योगीन्द्रसत्तम ।
तदेव मायया पूर्वं बभूव नगरं महत् ॥ ४०॥

स्वसंवेद्येन योगेन लभ्यते नान्यथा क्वचित् ।
अथवा मे व्रताद्यैश्चोपासनेन महामुने ॥ ४१॥

न जपैस्तपसा दानैर्नानाकर्मपरायणैः ।
लभ्यते निजलोको वै जानीहि मुनिसत्तम ॥ ४२॥

न तत्र विष्णुशम्भ्वाद्याः शुकाद्या योगिनोऽपरे ।
गच्छन्ति मार्गहीनत्वादगम्यः सम्मतः सदा ॥ ४३॥

चतुर्विधमयैर्भावैर्लभ्यते न कदाचन ।
अगम्यस्तैर्न सन्देहो मम लोको महामते ॥ ४४॥

दशसाहस्रकं विप्र योजनानां प्रविस्तरः ।
अत ऊर्ध्वं च सर्वत्र तावन्मानः प्रकीर्तितः ॥ ४५॥

वर्तुलः सर्वतः सोऽपि स्वस्थाधारेण तिष्ठति ।
सदा ज्योतिर्मयः साक्षाज्ज्योतिषां ज्योतिरुच्यते ॥ ४६॥

न तत्र सगुणं सर्वं निर्गुणं नैव विद्यते ।
पुमान् नपुंसकं न स्त्री वर्तते मुनिसत्तम ॥ ४७॥

चतुर्विधेषु सर्वेषु नानाभावगतेषु च ।
स्वसंवेद्यं निजात्मस्थं संस्थितं मेऽत्र सन्निधौ ॥ ४८॥

चतुर्विधेषु सर्वेषु मायायुक्तमिह स्थितम् ।
सदा भ्रान्तं विजानीहि स्वस्वरूपं महामते ॥ ४९॥

तेषु मोहविहीनं यत् साक्षिरूपं सदा स्थितम् ।
(Page खं. ५ अ. ४० पान ९८)
निर्गुणेन स्वभावेन सदा खण्डमयं परम् ॥ ५०॥

तयोर्योगे निजानन्दो ढुण्ढिलोकग एव सः ।
बभूव तत्र भक्त्या मे भक्तास्तिष्ठन्ति सन्निधौ ॥ ५१॥

मम लोके महाभाग न क्षुधा न तृषादिकम् ।
सदा स्वानन्दभोगस्था वसन्ति मम सेवकाः ॥ ५२॥

न कृत्रिमं सुखं तत्र विद्यतेऽकृत्रिमं न हि ।
स्वानन्देन निमग्नास्ते सर्वं भुञ्जन्ति नित्यदा ॥ ५३॥

सगुणं तु सुखं सर्वे भुञ्जते निर्गुणं तथा ।
स्वानन्दसम्भवं तत्स्था एककाले महामते ॥ ५४॥

अत्र यत् संस्थितं सर्वं नानाभेदमयं मुने ।
तदेव ज्योतीरूपेण मम लोके प्रतिष्ठति ॥ ५५॥

अत्रैव न स्थितं यच्च निर्गुणं विप्र तत्र तत् ।

ज्योतीरूपेण मे लोके किल तिष्ठति सर्वदा ॥ ५६॥

स्वानन्दसम्भवं सर्वं तत्र तिष्ठति नित्यदा ।
मायया मेऽत्र लोकेऽतः सदाऽऽश्चर्यमयो बभौ ॥ ५७॥

सगुणो नैव विप्रेश सगुणं तत्र वर्तते ।
निर्गुणो न स नैर्गुण्यं वर्तते मे च लोकगम् ॥ ५८॥

सगुणैर्निर्गुणैर्हीनं वर्तते तत्र सर्वदा ।
अत आश्चर्यसंयुक्तो मम लोको विशेषतः ॥ ५९॥

न तत्राऽहं स्वभावश्च नाऽहं भावविवर्जितः ।
मम लोके महायोगिन् सदा तिष्ठन्ति मत्प्रियाः ॥ ६०॥

सगुणाऽमृतरूपं यद्भोगदं मृततुल्यकम् ।
निर्गुणामृतरूपं यदमृते भोगकारकम् ॥ ६१॥

तयोर्योगे महायोगिन्नमृतं स्वस्वरूपकम् ।
तन्मयः सागरस्तत्र स्वस्थाधारेण वर्तते ॥ ६२॥

मिष्टं नानाविधं तस्मान्निःसृतं सगुणात्मकम् ।
निर्गुणात्मकमेतस्मादिक्षुसागर उच्यते ॥ ६३॥

स्वस्वरूपात्मकं तत्र जलं रक्तस्वरूपकम् ।
तस्य नश्यति पानेन नैर्गुण्यं सगुणात्मकम् ॥ ६४॥

तस्माद्धारा समुद्भूता मधुधारा प्रकथ्यते ।
तया सगुणनैर्गुण्यं वर्तते तृप्तिसंयुतम् ॥ ६५॥

तत्राऽहं सिद्धिबुद्धिभ्यां सदा क्रीडामि मानद ।
ब्रह्मप्रियाद्यकास्तत्र गणा मे निवसन्ति हि ॥ ६६॥

शुण्डादण्डादिचिह्नैश्च संयुतोऽहं सदा मुने ।
गणा मेऽन्ये तथा भक्ताः स्वेच्छारूपाः वसन्ति ते ॥ ६७॥

एतत्ते कथितं सर्वं मम लोकसुखं महत् ।
मानयुक्तं मानहीनं हृदये पश्य मां मुने ॥ ६८॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पञ्चमे खण्डे लम्बोदरचरिते स्वानन्दलोकवर्णनं नाम चत्वारिंशत्तमोऽध्यायः ॥
५.४०

(Page खं. ५ अ. ४१ पान ९९)

## ५.४१ स्वानन्दस्थितिवर्णनं नामैकचत्वारिंशत्तमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

कपिल उवाच ।
त्वदीयभक्तिसंयुक्ता नराः स्वानन्दगा बभुः ।
गच्छन्ति केन मार्गेण तद्वदस्व गजानन ॥ १॥

चिन्तामणिरुवाच ।
मदीयोपासनायुक्ता मन्निष्ठा मत्परायणाः ।
अन्ते मेऽत्र स्मृतिं कृत्वा गच्छन्ति मम लोककम् ॥ २॥

विमानं स्वस्वरूपाढ्यं प्रेषयामि महामुने ।
शिवविष्ण्वादिदेवानामदृश्यं निजलोकतः ॥ ३॥

तमारुह्य गणैर्युक्तं भक्तो मे देहधृक् स्वयम् ।
स्वर्गान् पश्यंश्च सर्वान् स विस्मितो भवतीत्यहो ॥ ४॥

न तं पश्यति देवाद्या योगिनो यानसंस्थितम् ।
स्वानन्दचक्षुषा हीना मृतदेहमया मुने ॥ ५॥

शक्तेर्लोकमतिक्रम्य तथा सौरं च वैष्णवम् ।
शैवं ततः परं सोऽपि मम लोकं प्रविन्दति ॥ ६॥

तत्राज्ञानमयश्चादावन्धकारः प्रदृश्यते ।
नरेण न गणैर्विप्र देहधारणकारणात् ॥ ७॥

विमानप्रभया तत्र मदीयस्मरणेन वै ।
योजनान्ययुतं गत्वा प्रकाशस्तेन दृश्यते ॥ ८॥

तत्र भ्रामरिका देवी प्रचण्डदेहधारिणी ।
ज्योतिर्मयस्वरूपेणाज्ञानिभ्यो भयदा बभौ ॥ ९॥

जन्ममृत्यभयं सर्वं नानाभेदकरं भ्रमम् ।
तया संरचितं पूर्णं मम जानीहि मायया ॥ १०॥

भ्रामयेत् सर्वभूतानि सा स्थिता भ्रामरी स्वयम् ।
स्वस्याधारेण तत्रैव स्वानन्दमयकायभृत् ॥ ११॥

तां पश्य भयभीतः स मां सस्मार विशेषतः ।
ततो गणैः समाश्वास्याऽग्रे निन्ये मानवोत्तमः ॥ १२॥

तस्या मस्तकगा शक्तिर्ज्योतिराधाररूपिणी ।
अज्ञानिभ्यो सदा विप्र भयदा सा बभूव ह ॥ १३॥

जीवरूपं सदा सर्वभेदमोहधरं परम् ।
शिवरूपं तथा साक्षि तदाधारं प्रवर्तते ॥ १४॥

देहादीनां महायोगिन्नाधारो जीवसंज्ञितः ।
स्वयमाधारहीनत्वात् परमात्मा तदेव च ॥ १५॥

सर्वेषां पूर्ण आधारस्तया क्लृप्तो महामुने ।
आधारशक्तिरेवं सा नाम्ना तस्य स्थिताऽभवत् ॥ १६॥

तयाऽहं द्विविधश्चित्ते भवाम्यज्ञानिनां सदा ।
जीवात्मपरमात्मस्थो माया तत्र बभौ परा ॥ १७॥

मदीयध्यानजेनैव तामतिक्रम्य मानवः ।
गणैर्निन्ये पुरोभागे मम दर्शनकारणात् ॥ १८॥

ततोऽतिज्योतिषा रूपा शक्तिर्वै कामदायिनी ।
तस्या मस्तकगा विप्र शोभते हर्षदायिनी ॥ १९॥

जन्ममृत्युयुतं सर्वं भेदरूपं तथा परम् ।
आत्माकारं तयोर्योगे योगरूपा तु सा स्मृता ॥ २०॥

तथा कामयुतं विप्र द्विविधं प्रकृतं सदा ।
तेन देहात्मनोर्योगः परस्परयुतोऽभवत् ॥ २१॥

उत्पत्तिस्थितिसंहारयुक्तं भ्रान्तिधरं स्मृतम् ।
नानाभेदमयं पूर्णं क्षयवृद्ध्यादिसंयुतम् ॥ २२॥

आत्मा सदाऽमृताधार उत्पत्तिस्थितिनाशकैः ।
हीना वृद्धिक्षयादिभ्यो वदन्ति वेदवादिनः ॥ २३॥

किमर्थं भेदयुक्तं च सर्वदाऽऽत्मानमिच्छति ।
तथा पश्यात्मवैचित्र्यं विरुद्धे सतिमानद ॥ २४॥

कामयुक्तं ह्यसिपदेन द्वन्द्वस्थं कृतं सदा ।
तेन मोहप्रभावेण परस्परहितं जगत् ॥ २५॥

अतः सा शक्तिराख्याता कामदा सर्वमोहिनी ।
असिरूपा विशेषज्ञ महामाया मदीयिका ॥ २६॥

भ्रामर्या भ्रामिका काऽपि शक्तिर्नात्र प्रदृश्यते ।
त्वं पदस्थां महामायां तां जानीहि प्रभावतः ॥ २७॥

आधाराया महायोगिन्नाधारान्या न विद्यते ।
शक्तिः कुत्र ततः सापि तत्पदस्थाऽत्र कथ्यते ॥ २८॥

कामदायाश्च का शक्तिः कामदान्या न विद्यते ।
सर्वदा सर्वरूपासि पदमय्यापि सा बभौ ॥ २९॥

तस्या मस्तकगं विद्धि लोकं मे स्वस्वरूपकम् ।
मायया रचितं विप्र मया स्वानुभवात्मकम् ॥ ३०॥

तत्रागत्य महाभक्तः पिबेदिक्षु समुद्रजम् ।
जलं तेन स वै सद्यो ज्योतीरूपधरो भवेत् ॥ ३१॥

भेदाभेदादिहीनश्च भूत्वा पश्यति मां ततः ।
मद्दर्शनजयोगेन ब्रह्मभूतो भवेन्नरः ॥ ३२॥

स्वेच्छया निजलोकस्थो यत्र तत्र स सञ्चरेत् ।
सगुणो निर्गुणो भूत्वा सदा स्वानन्दगः परः ॥ ३३॥

ततस्तस्य पुनर्भ्रान्तिर्न भवेन् मुनिसत्तम ।
कल्पकोटिशतैर्वाऽपि निश्चितं वेदवादिभिः ॥ ३४॥

महालये चतुर्भेदा मयि चैकत्वमागताः ।
verse 35 missing in the original
अज्ञानेन युताः सर्वे पुनस्तान् संसृजाम्यहम् ॥ ३६॥

एतत्ते कथितं सर्वं मम लोकागमे मुने ।
सङ्क्षेपेणैव जानीहि मार्गहीनं सुसिद्धिदम् ॥ ३७॥

कपिल उवाच ।
त्वदीयोपासनं कृत्वा बहवस्ते गजानन ।
लोकं गच्छन्ति विघ्नेश तथा योगिन एव च ॥ ३८॥

ब्रह्मभूताश्च ते ख्याताः कदाचिन्न पतन्ति चेत् ।

तदा जगदिदं स्वामिन् क्षीणरूपं भवेत् क्रमात् ॥ ३९॥

पुनः पुनः सुस्रष्टा त्वं क्षीणे क्षीणे कथं प्रभो ।
पूर्णं विश्वमिदं नित्यमञ्जसा भाति खेलसि ॥ ४०॥

चिन्तामणिरुवाच ।
यथाऽहं मायया विप्र युद्धकाले विशेषतः ।
भूत्वा ह्यनन्तरूपेण प्रयुध्ये विश्वपालनात् ॥ ४१॥

हत्वा दैत्यादिकान् सर्वान् पुनरेकस्वरूपधृक् ।
भवामि सर्वभावज्ञो लीलार्थमवतारधृक् ॥ ४२॥

तथा मायाबलेनैव नूतनं संसृजाम्यहम् ।
न न्यूनाधिकमेवेदं विश्वं भवति सर्वदा ॥ ४३॥

कपिल उवाच ।
ब्रह्मभूता नरा नार्यः स्वानन्दे संस्थिता बभुः ।
अनन्तास्ते प्रभक्त्या वै पुनः स्वानन्दगामिनः ॥ ४४॥

तेषां वासः सदा तत्र नगरं नियतं प्रभो ।
सङ्कीर्णता भवेन्नूनं कुत्र तिष्ठन्ति तद्वद ॥ ४५॥

चिन्तामणिरुवाच ।
स्वानन्दे कल्पपर्यन्तमवसन्नित्यमादरात् ।
महालये समुत्पन्ने मद्देहे सङ्गता बभुः ॥ ४६॥

मया भिन्नं कृतं सर्वं युगादौ मुनिसत्तम ।
युगान्ते योगभावेन मद्रूपं भवतीत्यहो ॥ ४७॥

मद्देहे योगभावेनाज्ञानेनैव समागताः ।
सा योगनिद्रा विप्रेन्द्र मदीया कथ्यते बुधैः ॥ ४८॥

स्वानन्दस्था जनाः सर्वे ज्ञानयुक्ता मदीयके ।
देहे लीना वै भवन्ति योगीन्द्रा योगभावतः ॥ ४९॥

पुनः सृष्टियुगे विप्र निःसृतं विश्वमञ्जसा ।
अज्ञानेन युतं लीनं मायया मे न संशयः ॥ ५०॥

ज्ञानेन ये समायाता मद्देहे ते पुनः कदा ।
भवन्ति भिन्नरूपा न सृष्ट्यादौ योगभाविताः ॥ ५१॥

(Page खं. ५ अ. ४१ पान १०१)
एवं वसन्ति ये तत्र स्वानन्दे मुनिसत्तम ।
कल्पे कल्पे मदीये ते देहे सायुज्यमागताः ॥ ५२॥

कपिल उवाच ।
भक्तिमिच्छन्ति विघ्नेश त्वदीयां नित्यमादरात् ।
न योगे प्रेमभावेन तेषां कुत्र स्थितिं वद ॥ ५३॥

कल्पे कल्पे महाभागा भक्तास्ते पूर्णभावतः ।
भवन्ति ये क्रमेणैवापाराः कुत्र वसन्ति ते ॥ ५४॥

चिन्तामणिरुवाच ।
दशयोजनसाहस्रं मानं तस्य प्रकीर्तितम् ।
योगिनां च मुमुक्षूणां न भक्तानां कदाचन ॥ ५५॥

अपारयोजनाकारो मम लोको न संशयः ।
स्वानन्दस्तत्र मे भक्ता वसन्ति सेवनोत्सुकाः ॥ ५६॥

सङ्ख्याहीनाश्च मद्भक्ताः सदा प्रेमरसाऽऽप्लुताः ।
नवधा मां भजन्ते ते कल्पे कल्पे गतव्यथाः ॥ ५७॥

भवन्ति तु भविष्यन्ति बभूवुर्ये महामुने ।
मद्भक्ता मे प्रसान्निध्ये वसन्ति मोहदाः सदा ॥ ५८॥

महाभागा प्रियं भक्तिसमं मे नैव विद्यते ।
भक्त्यधीनो महानन्दाद् भ्रमेयं भक्तसन्निधौ ॥ ५९॥

यत्र कुत्र तु तिष्ठन्ति भक्ता मे तत्र सर्वदा ।
तिष्ठामि सर्वभावेन तान् रक्षामि सुविह्वलः ॥ ६०॥

नवधा चित्तभावेन भक्तसामीप्यगो मुदा ।
भजामि भक्तमाहात्म्यं मोहितश्चेष्टितः सदा ॥ ६१॥

न स्वानन्दप्रियो मे वै सिद्धिर्बुद्धिः सुतौ तथा ।
मम देहो न विप्रेश प्रिया भक्ता यथा च मे ॥ ६२॥

कपिल उवाच ।
स्वानन्दस्था गणास्ते ये भक्तान्नेतुं समागताः ।
ज्योतीरूपाश्च भक्तैस्ते दृश्यन्ते कथमप्यहो ॥ ६३॥

चिन्तामणिरुवाच ।
मायया मे महायोगिन् दुर्लभं किं भवेद्वद ।
कृपया मेऽत्र पश्यन्ति भक्तास्तान् चर्मचक्षुषा ॥ ६४॥

स्वानन्दः सर्वरूपश्च तत्र मार्गं वदामि ते ।
भेदयुक्तैर्गणा मे वै दृश्यन्ते भेदसंयुताः ॥ ६५॥

भेदहीनैः सदात्मस्थैर्निर्गुणा मे गणा मुने ।
दृश्यन्ते स्वात्मसंस्थैश्च स्वसंवेद्यात्मकास्तथा ॥ ६६॥

जलादिषु यथा बिम्बं भवते तादृशं किल ।
तथा मदीयलोकस्था दृश्यन्ते सर्वमण्डले ॥ ६७॥

एतत्ते कथितं सर्वं ममलोकविचेष्टितम् ।
अधुनाऽहं गमिष्यामि निजलोकं महामुने ॥ ६८॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पञ्चमे खण्डे लम्बोदरचरिते स्वानन्दस्थितिवर्णनं नामैकचत्वारिंशत्तमोऽध्यायः ॥ ५.४१

(Page खं. ५ अ. ४२ पान १०२)

## ५.४२ चिन्तामणय्न्तर्धानवर्णनं नाम द्विचत्वारिंशत्तमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

कपिल उवाच ।
एतादृशी महाभक्तिस्त्वदीया गणनायक ।
यदा सर्वे प्रकुर्वन्ति तदा विश्वं कथं भवेत् ॥ १॥

सर्वेभ्यः श्रेष्ठभावेन जानन्ति त्वां यदा नराः ।
तदा त्वां सर्वभावेन भजन्ते ते न संशयः ॥ २॥

श्रेष्ठार्थिनो नराः सर्वे भजन्ते शीघ्रसिद्धये ।
देवेन्द्रास्त्वां परित्यज्यान्यान् ब्रह्मप कथं वद ॥ ३॥

चिन्तामणिरुवाच ।
मया सृष्टं जगत् सर्वं नानाभावमयं मुने ।
नानाभावयुताः सर्वे न भजन्ते तु मां सदा ॥ ४॥

चतुर्णां देवमुख्यानां कृत्वा भजनमुत्तमम् ।
तेन शुद्धान्तरात्मानो मां भजन्ते ततः परम् ॥ ५॥

अन्यच्च शृणु मे वाक्यं मया माया प्रकाशिता ।
सर्वश्रेष्ठतमं मां ते न जानन्ति प्रमोहिताः ॥ ६॥

यदाऽहं मायया विप्र छादयामि न मे वपुः ।
तदा मोहविहीनाश्चेच्छ्रेष्ठं मां प्रवन्दति च ॥ ७॥

मया नानावताराश्च कृतास्त्रैलोक्यगेषु वै ।
देवादीनां प्रगेहेषु तादृशं मां वदन्ति ते ॥ ८॥

अग्रपूज्यत्वमेवं यत् सर्वपूज्यत्वमञ्जसा ।
शिवेन दत्तमस्मै तद्गणेशाय वदन्ति ते ॥ ९॥

मायया मोहिता मे मां पार्वतीमलसम्भवम् ।
शिवपुत्रं शिवेनैव स्थापितं प्रवदन्ति ते ॥ १०॥

शिवगणस्वरूपोऽयं मुक्तिं दातुं न च क्षमः ।
कार्यसिद्धिस्वभावेन कामपूरो गणेश्वरः ॥ ११॥

इत्यादिभावा बहवो मया विप्र प्रकाशिताः ।
क्रीडार्थं तेन मां त्यक्त्वा श्रेष्ठं जानन्ति चापरम् ॥ १२॥

नो चेत् स्वानन्दगाः सर्वे भवन्त्यत्र न संशयः ।
निर्मोहात् कल्पपर्यन्तं जगन्नैव प्रवर्तते ॥ १३॥

अन्यच्च कर्मणा सर्वं ब्रह्माण्डं जनसंयुतम् ।
नानाभावात्ममोहस्थं भवतेऽनेकनिश्चयात् ॥ १४॥

अन्ते मदीयभावस्था भवन्ते शुद्धचेतसः ।
वेदशास्त्रार्थतत्त्वज्ञाः स्वयमेव महामुने ॥ १५॥

अहं साक्षाद् बुद्धिपतिः कृत्वा बुद्धेश्च चालनम् ।
गोपयामि गणेशस्य स्वरूपं देहिनां हृदि ॥ १६॥

तेन मां नैव जानन्ति जना परमगं कदा ।
विवेकमार्गं ते तत्र वदामि शृणु यत्नतः ॥ १७॥

कृते मां पूर्णभावेन भजन्ते सर्वमानवाः ।
अज्ञानावरणैर्हीनाः श्रेष्ठं ते प्रवन्दति हि ॥ १८॥

त्रेतायां पादहीनेन मां भजन्ते नरा मुने ।
पञ्चायतनभावेन पञ्च श्रेष्ठान् वदन्ति ते ॥ १९॥

तत्र सर्वेषु साम्येन मां भजन्ते न संशयः ।
चर्तुभ्यः श्रेष्ठभावाख्यं ज्ञानं नष्टं मदीयकम् ॥ २०॥

द्वापरे द्विपदा हीनं मां भजन्ते सुरादयः ।
वदन्ति न्यूनरूपं तु चतुर्भ्यः शङ्करात्मजम् ॥ २१॥

वेदशास्त्रे पुराणेषु श्रेष्ठं जानन्ति मानवाः ।
मोहेन युगमानेन मां न्यूनं प्रवदन्ति ते ॥ २२॥

सर्वं ब्रह्मेति वेदेषु कथितं तत्र किं भवेत् ।
सत्ता समानरूपा तु तथाऽयं गणनायकः ॥ २३॥

कलौ त्रिपादहीनेन मां ज्ञानेन भजन्ति ते ।
वदन्ति वै नरास्तत्र मलजोऽयं गजाननः ॥ २४॥

शिवस्य वरदानेनाग्रपूज्योऽयं गणेश्वरः ।
सर्वपूज्यो यथा दैत्या जन्तवो वरसंयुताः ॥ २५॥

सर्वं ब्रह्मेति वेदेषु कथितं तेन विघ्नपः ।
(Page खं. ५ अ. ४२ पान १०३)
वर्णितोऽयं शिववरबलेनैव मुनीन्द्रकैः ॥ २६॥

स्वसत्तासंयुतो देवो नाऽयं चिन्तामणिः कदा ।
शिवभक्तिबलेनाद्यो वरयुक्तो बभूव ह ॥ २७॥

कलिप्रान्ते मुने लोका न भजिष्यन्ति मां कदा ।
एकपादमयी भक्तिर्नाशं यास्यति निश्चितम् ॥ २८॥

मतभेदेन मोहेनादौ मां त्यक्त्वा विशेषतः ।
शिवविष्ण्वादिकान् सर्वे भजन्ते त्वग्रपूज्यकान् ॥ २९॥

सर्वपूज्याग्रपूज्यत्वं नष्टं भवति मे ततः ।
अन्ते विघ्नयुताः सर्वे नरकेषु पचन्ति वै ॥ ३०॥

युगमानप्रसिद्ध्यर्थं कृतं मेऽत्र महामुने ।
कर्माकर्मविकर्माणि स्थापितानि विभागशः ॥ ३१॥

न करोमि यदाऽहं चेत्तदा मे वरदानकम् ।
कर्मभ्यश्च युगेभ्यश्च निष्फलं भवतीत्यहो ॥ ३२॥

नरकादय आख्याताः स्वर्गाश्चैव महामुने ।
भवन्ति निष्फलाः सर्वे तदर्थं खेलयाम्यहम् ॥ ३३॥

शुभाशुभमयं सर्वं मया स्ववरदानतः ।
स्थापितं तेन मोहेन मां न जानन्ति मूलगम् ॥ ३४॥

एतत्ते सर्वमाख्यातं मदीयं चेष्टितं महत् ।
मा संशयं मुने त्वं तु कुरु मां भज भावतः ॥ ३५॥

कपिल उवाच ।
एवमुक्त्वा गणेशानो मामन्तर्धानमाकरोत् ।
अहं खेदसमायुक्तो हृदये तमलोकयम् ॥ ३६॥

मयाऽसौ स्थापितश्चिन्तामणिर्विप्र परेश्वरः ।
पूजयामि भजे नित्यं भक्तिभावसमन्वितः ॥ ३७॥

एतत्ते कथितं सर्वं रहस्यं तस्य धीमतः ।
लोकस्य तेन यत् प्रोक्तं भज तं भक्तिसंयुतः ॥ ३८॥

त्वं साक्षाद्गाणपत्यश्च देहधारी न संशयः ।
तवदर्शनमात्रेण सर्वे पूता भवन्ति च ॥ ३९॥

गार्ग्य उवाच ।
श्रुत्वैवं मुद्गलो योगी महत् स्वानन्दलोकगम् ।
माहात्म्यं विस्मितो भूत्वा प्रणनाम महामुनिम् ॥ ४०॥

चिन्तामणिं समभ्यर्च्य प्रणम्य कपिलं पुनः ।
मुद्गलः स्वाश्रमं राजन् प्रययौ गणपे रतः ॥ ४१॥

एवं ते सर्वमाख्यातं भज तं भावसंयुतः ।
अनेन जडदेहेन स्वानन्दं लभसे नृप ॥ ४२॥

मुद्गल उवाच ।
एवमुक्त्वा महीपालमैलं गार्ग्यो महामुनिः ।
अनुज्ञातश्च भूपेन ययौ स्वस्याश्रमं विधे ॥ ४३॥

ऐलोऽपि गणराजं तं लक्षसंज्ञं निरन्तरम् ।

सेव्यस्वानन्दगो भूत्वा भजते तं प्रजापते ॥ ४४॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पञ्चमे खण्डे लम्बोदरचरिते चिन्तामण्यन्तर्धानवर्णनं नाम द्विचत्वारिंशत्तमोऽध्यायः ॥ ५.४२

## ५.४३ भक्तिमार्गवर्णनं नाम त्रिचत्वारिंशत्तमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

दक्ष उवाच ।
धन्योऽहं कृतकृत्योऽहं श्रुत्वा स्वानन्दजां कथाम् ।
विस्मितो योगिराजेन्द्र न समं तस्य विद्यते ॥ १॥

अधुना ब्रूहि मे सर्वं यश ऐलस्य भक्तिजम् ।
गार्ग्येण नृपशार्दूल उपदिष्टः किमाचरत् ॥ २॥

गणेशलोकगः सोऽपि बभूव वद तत्कथम् ।
अत्र तत्र गणेशानं भजते कथमप्यहो ॥ ३॥

मुद्गल उवाच ।
गार्ग्येण नृपवर्यश्च गाणपत्येन शिक्षितः ।
गाणपत्येन मार्गेणाभजत्तं गणनायकम् ॥ ४॥

स्कन्देन स्थापितस्तत्र लक्षो नाम गजाननः ।
तं नित्यं सेवयामासानन्यभावेन विघ्नपम् ॥ ५॥

न गणेशात् परं किञ्चिज्जानाति नृपसत्तमः ।
एकनिष्ठः स्वभावेनाभजत्तं लक्षविघ्नपम् ॥ ६॥

दक्ष उवाच ।
एकनिष्ठात्मिकां भक्तिं वद मेऽन्यां च मुद्गल ।
यया विघ्नेश्वरः साक्षात् सन्तुष्टो जायते नृणाम् ॥ ७॥

मुद्गल उवाच ।
पञ्चायतनपूजां वै तथाग्नेः सेवनं परम् ।
द्विजानां नित्यमेतत्ते कथितं सर्वसम्मतम् ॥ ८॥

विघ्नरूपं महाघोरं परत्रेह च बन्धकम् ।

ब्रह्ममार्गस्य संरोधकारकं विद्धि सर्वदा ॥ ९॥

तं जयेद्विघ्नराजस्य पूजनेन नरोत्तमः ।
विद्यार्थं शङ्करं सोऽपि पूजयेन्नित्यमादरात् ॥ १०॥

यशोर्थं केशवं चैवारोग्यार्थं रविमञ्जसा ।
सौभाग्यार्थं नरस्तद्वत् पूजयेज्जगदम्बिकाम् ॥ ११॥

अग्निं होमादिमार्गेण पूजयेत् कर्मसिद्धये ।
देवादीनां विभागार्थं सर्वेषां तोषकारकम् ॥ १२॥

एवं मत्वा तु यो मर्त्यः करोति सेवनं सदा ।
स्वधर्मस्य प्रजानाथ ब्रह्मार्पणतया किल ॥ १३॥

अथवा कामनायुक्तः स चेत्तदपि तादृशम् ।
कुर्यात् कर्माङ्गदेवेभ्यः समर्प्य सकलां क्रियाम् ॥ १४॥

सर्वे समानरूपाश्च तस्य प्रोक्ताः प्रजापते ।
स्वधर्माचरणं श्रेष्ठं जानीते सर्वसौख्यदम् ॥ १५॥

तत्र विघ्नेश्वरं साक्षान् मध्ये संस्थाप्य सर्वदा ।
ईशान्यां विष्णुमेव त्वाग्नेय्यां शम्भुं प्रपूजयेत् ॥ १६॥

नैर्ऋत्यां जगदम्बां च वायव्यां रविमादरात् ।
पञ्चायतनभावेन पूजयेत् पञ्च देवताः ॥ १७॥

सर्वेषां पूज्यभावाद्वै सर्वाग्रे पूज्य भावतः ।
ज्येष्ठराजस्वरूपाच्च मध्ये तिष्ठति विघ्नपः ॥ १८॥

अथवा पञ्चदेवेषु मन्त्रं गृह्य स्वभावजम् ।
एकस्य तस्य मध्ये स स्थापनं कुरुते स्वयम् ॥ १९॥

सर्वं कलांशरूपस्थं पञ्चायतनकस्य वै ।
पूजितेषु प्रजानाथ पञ्चसु पूजितं जगत् ॥ २०॥

देवेन कार्यसिद्ध्यर्थं नाना देवाः कृताः पुरा ।
ते सर्वे तत्स्वरूपाश्च पूजनीया नरेण वै ॥ २१॥

इयं सर्वात्मिका भक्तिः कथिता च प्रजापते ।
स्वेष्टभावेन सर्वत्र परात्तत् ध्यानकारणात् ॥ २२॥

अधुना शृणु दक्ष त्वमेकनिष्ठां महाद्भुताम् ।
स्वल्पकालेन भक्तस्य सिद्धिदां परमप्रियाम् ॥ २३॥

स्वस्येष्टदेवतायां तु विश्वं सर्वं प्रतिष्ठितम् ।
तस्य पूजनमात्रेण सर्वं सम्पूजितं भवेत् ॥ २४॥

अनन्तरूपभावेन सर्वत्र कलया स्वयम् ।
तिष्ठति पूजनं तेषां न भवेद्देहधारिणाम् ॥ २५॥

चराचरमयो देवः पूजनीयं चराचरम् ।
(Page खं. ५ अ. ४३ पान १०५)
केनाऽपि तत्र विप्रेन्द्र भवेच्चासङ्ख्यभावतः ॥ २६॥

चराचरं पूजितं चेत्तदपि तस्य रोमगम् ।
ब्रह्माण्डकूटमेवेदं वदन्ति मुनयोऽपरे ॥ २७॥

यस्य रोमाञ्चरन्ध्रेषु ब्रह्माण्डानां हि कोटयः ।
अतः सम्पूर्णदेहस्य पूजनं न भवेत् कदा ॥ २८॥

भक्तवात्सल्यभावार्थं देहधारी बभूव ह ।
देवस्तस्य भवेत् सर्वं पूजनेन सुपूजितम् ॥ २९॥

अनेन निश्चयेनैव पूजयेत् स्वेष्टदैवतम् ।
अन्येषां क्षोभतोषौ स सदा नेच्छति चेतसा ॥ ३०॥

नान्यान्निन्देन्न वै दक्ष स्तुयादेकत्वमाश्रितः ।
स्वेष्टदेवपरो भूत्वा भक्तिं कुर्याद्विशेषतः ॥ ३१॥

नरो विघ्नेश्वरेणैव सदा युक्तं प्रजापते ।
स्वेष्टदेवं समापूज्य सिद्धिं स लभते पराम् ॥ ३२॥

एकनिष्ठा महाभक्तिर्न भवेत्तत्र खण्डिता ।
तत्र मार्गं प्रवक्ष्यामि सर्वसंशयनाशनम् ॥ ३३॥

यथा स्वशाखया संयुक्तं सन्ध्यादिकमाचरेत् ।
तथाऽग्रपूज्यभावेन पूजयेद्गणनायकम् ॥ ३४॥

सर्वेषामादिपूज्योऽयं सर्वादौ वेदवादतः ।
अन्यथा वेदवैरुध्यात् सकला नश्यति क्रिया ॥ ३५॥

शिवविष्णुमुखादीनामग्रपूजा न विद्यते ।

सर्वादौ तेन ते त्याज्या न त्याज्योऽयं गजाननः ॥ ३६॥

अन्यच्च शृणु मे वाक्यं सर्वेभ्यः फलदायकः ।
गणेशो नात्र सन्देहः सिद्धिबुद्धिसमन्वितः ॥ ३७॥

धर्मार्थकाममोक्षाश्च ब्रह्मभूतत्वमञ्जसा ।
सिद्ध्यधीनं प्रजानाथ पञ्चकं वेदवादतः ॥ ३८॥

कर्ता बुद्ध्या समायुक्तः स्वेष्टदेवस्तया युतः ।
बुद्ध्यधीनं जगत् सर्वं ज्ञानं देहादिकं परम् ॥ ३९॥

तयोः स्वामी गणेशानो ब्रह्मणस्पतिवाचकः ।
सर्वादौ तमसम्पूज्य नारकी स भवेन्नरः ॥ ४०॥

यदा गणपतिर्दक्ष सर्वादौ पूजितो न चेत् ।
पतिव्रते सिद्धिबुद्धी तत्र नैवागमिष्यतः ॥ ४१॥

सर्वसिद्धिविहीनश्च भवेत् दुर्बुद्धिसंयुतः ।
देहान्ते नरकेष्वेव स पचेन्नात्र संशयः ॥ ४२॥

शिवविष्णुमुखानां स ज्येष्ठश्चैव प्रकीर्तितः ।
तस्योल्लङ्घनमात्रेण भ्रंशयिष्यन्ति देवताः ॥ ४३॥

यथा गणपतिद्वेषाद्बलिं वैष्णवमुत्तमम् ।
नरकेषु निबद्ध्यैवोद्यतो विष्णुर्बभूव ह ॥ ४४॥

सन्ध्यादि कर्मवच्चायं सर्वादौ सम्मतो बुधैः ।
तस्य पूजनमात्रेणैकनिष्ठा नैव खण्डिता ॥ ४५॥

गणेश एकनिष्ठश्चेत्तदा गणपतिः सदा ।
एकः पूज्यो न सन्देहोऽन्येषामावश्यखण्डनात् ॥ ४६॥

एकनिष्ठसमा भक्तिर्विद्यते नैव निश्चितम् ।
ब्रह्म नानाविधं तेन विश्वं भक्त्या प्रपूजितम् ॥ ४७॥

जगद्ब्रह्मयुतो देवः स्वेष्टः सम्पूर्णभावतः ।
पूजितस्तेन भवति सन्तुष्टे सकलं सदा ॥ ४८॥

एकनिष्ठो यथा भक्तस्तथा देवोऽपि मानद ।
एकभक्ताश्रितो भूत्वाऽभवत्तत्रैव संस्थितः ॥ ४९॥

एतत्ते कथितं दक्ष भजनं त्रिविधं मया ।
अनेन भक्तिमार्गेण वाञ्छितं लभते नरः ॥ ५०॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पञ्चमे खण्डे लम्बोदरचरिते भक्तिमार्गवर्णनं नाम त्रिचत्वारिंशत्तमोऽध्यायः ॥ ५.४३

(Page खं. ५ अ. ४४ पान १०६)

## ५.४४ ध्यानदूर्वादिपूजाविधिवर्णनं नाम चतुश्चत्वारिंशत्तमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
एवमैलः स राजर्षिरेकनिष्ठापरायणः ।
गणेशमभजन्नित्यं यथा गृत्समदस्तथा ॥ १॥

ध्यात्वा गजाननं देवमेकान्ते तद्गताऽखिलः ।
मानसे राज्यभोगे स निःस्पृहः सम्बभूव ह ॥ २॥

पुत्रे राज्यं परित्यज्य पूजयित्वा गजाननम् ।
ध्यानयुक्तः स्वभावेनातिष्ठत्तत्रैव नित्यदा ॥ ३॥

दक्ष उवाच ।
गणेशस्य ध्यानमैलकृतं मे वद साम्प्रतम् ।
तथाऽहं ध्यानसंयुक्तो भजिष्यामि निरन्तरम् ॥ ४॥

मुद्गल उवाच ।
यथैलो नृपवर्यः स गार्ग्याज्ज्ञात्वा गणेश्वरम् ।
अभजत् ध्यानयुक्तश्च तत् ध्यानं शृणु मानद ॥ ५॥

ऐल उवाच ।
नमामि विघ्नेश्वरपादपङ्कजं सुचिह्नितं चाखिलदं निजात्मनाम् ।
ध्वजासिपद्माभयवज्रलाञ्छनैः परश्वधेनैव सुकोमलं परम् ॥ ६॥

सुरक्तपादाङ्गुलकैः सुकोमलैर्नखप्रभाताम्रतया सुराजितम् ।
सुगुल्फयुक्तं मृदुमांसलं महन् मोहं हरेत् तत्तिमिरं हृदि स्थितम् ॥ ७॥

जङ्घे परे रक्तसुभामये ततो ध्यायामि मांसेन युते सुकोमले ।

तज्जानुनी मांसलके सुरोमभिराकोमलैर्वक्रशिखैः सुसंवृते ॥ ८॥

ऊरू सुमांसेन समावृतौ परौ रम्भासमानौ सुविराजितौ तथा ।
रक्तौ हृदा चिन्तनमात्रभावतो भक्तिप्रदौ विघ्नहरस्य चिन्तये ॥ ९॥

कटिं सदा मांसलरक्तरञ्जितां सुवर्तुलां मध्यमभागसंश्रिताम् ।
गणेश्वरस्यैव तु चिन्तयाम्यहं सदा सुखानन्दकरस्य नित्यदा ॥ १०॥

वस्त्रं सुरक्तं हृदि चिन्तयाम्यहमनन्तमौल्यं कटिभागसंस्थितम् ।
नाभिं सुवृत्तां परमश्रिया युतां शेषस्य संवासकरीं तु चिन्तये ॥ ११॥

महोदरं मांसलभावसंयुतं सुरोमयुक्तं प्रभया विराजितम् ।
विचिन्तयेऽहं सकलप्रकाशकं त्रयीप्रमूलं परमव्ययं परम् ॥ १२॥

श्रीवक्रतुण्डस्य विशालरूपकं वक्षस्तथा रक्तमयं सुमांसलम् ।
रक्तं स्तनाभ्यां हृदयं तु चिन्तये चिन्तामणिं तत्र सुखप्रदं परम् ॥ १३॥

कण्ठं त्रिरेखायुतमेव मांसलं रक्तं गणेशस्य च तेजसा युतम् ।
स्कन्धौ वृषस्कन्धसमौ सुकोमलौ ध्यायामि चित्ते सततं सुरक्तकौ ॥ १४॥

बाहू सदा मांसलकौ प्रभासितौ स्वानन्दनाथस्य मनोऽतिसौख्यदौ ।
हस्तौ तथा रक्तसुतेजसा युतौ वामौ हृदा दक्षिणकौ तु चिन्तये ॥ १५॥

कराङ्गुलीर्विंशतिकाः सुवर्तुला नखैः सुरक्तैश्च सुतेजसा युताः ।
गणेश्वरस्यैव हृदि प्रचिन्तये स्वभक्तरक्षाकरिकाः सुभूषिताः ॥ १६॥

मुखं तु शुण्डायुतमेव चिन्तये त्रिनेत्रयुक्तं परमप्रकाशकम् ।
सदैकदन्तस्य च तीक्ष्णदन्तकं स्वभक्तकान् प्रेमरसेन सौख्यदम् ॥ १७॥

कर्णौ विशालौ हृदि चिन्तये परौ भक्ताय निष्कामसुकामदौ तथा ।
शूर्पाकृती चञ्चलभावधारिणौ विघ्नेश्वरस्यैव च वेदरूपिणौ ॥ १८॥

कपोलकौ षट्पदरूपधारिभिर्मुनीश्वरैर्ब्रह्ममदद्रवार्थिभिः ।
सुसंवृतौ नादयुतैर्निरन्तरं गणेश्वरस्यैव हृदा विचिन्तये ॥ १९॥

भालं सुतेजोयुतमेव चिन्तये श्रीढुण्ढिराजस्य निशाकरस्थलम् ।
(Page खं. ५ अ. ४४ पान १०७)
रक्ताष्टगन्धैश्च सुचित्रितं प्रभोर्बिन्दुप्रयुक्तं त्वथ तण्डुलैर्युतम् ॥ २०॥

केशैः समाच्छादितमस्तकं तथा सञ्चिन्तये विघ्नविनाशकारिणः ।
ब्रह्माण्डमूले प्रभुमस्तकाश्रिते कुम्भस्थले ब्रह्मवरस्य सौख्यदे ॥ २१॥

गणेशदेहं परिचिन्तयाम्यहं सुभूषणैर्भूषितकं विचित्रकैः ।
अनर्घमूल्यैश्च सुवस्त्रकैस्तथा सुशोभितं ब्रह्मवरस्य सर्वदा ॥ २२॥

विचित्रगन्धैः परिलेपितं तथा सुचित्रितं भक्तवरैः सुयोगिभिः ।
गणाधिपं साधु हृदि स्थितं सदा विचिन्तयेऽहं निजभक्तिलालसम् ॥ २३॥

पाशाङ्कुशाद्यैश्च सुसंस्तुतं परं ढुण्ढिं प्रमोदादिभिरेव नित्यदा ।
गणेश्वरं दवेवरैस्तथोन्दुरुराजेन पूज्यं च सुचिन्तये हृदि ॥ २४॥

वेदैः पुराणैः स्मृतिभिश्च शास्त्रकैः स्तोत्रैः स्तुतं देहधरैर्विचिन्तये ।
ब्रह्मप्रियाद्यैश्च गणैरसङ्ख्यकैर्भक्त्या तथा मुद्गलमुख्यकैः परम् ॥ २५॥

सर्वाङ्गसंशोभनरूपयुक्तया सिद्ध्या गणेशं परिचिन्तये हृदि ।
संसेवितं वामगया सुशक्तिभिः सिद्ध्यादिभिः संवृतया स्वमायया ॥ २६॥

बुद्ध्या कलाभिश्च सुसेवितं तथा विद्याभिराराद्गणनायकं हृदि ।
सर्वाङ्गसंशोभनया स्वमायया सञ्चिन्तये दक्षिणभागभूषया ॥ २७॥

लक्षेण लाभेन च विघ्ननायकं संसेवितं शोभनशोभनेन तु ।
सञ्चिन्तये पुत्रवरेण सर्वदा ब्रह्मेश्वरं भक्तजनैः स्वधामगैः ॥ २८॥

अनन्तमन्त्रैः कथितं स्वरूपकं विचिन्तये वक्तुमशक्यभावतः ।
हृदि स्थितं ध्यानसुलोलुपं परं गणेश्वरं ब्रह्ममयागधारिणम् ॥ २९॥

मुद्गल उवाच ।
एवमैलः स राजर्षिर्गणेशभजने रतः ।
ध्यानं कृत्वा सदाऽतिष्ठद्गणेशस्य निवृत्तितः ॥ ३०॥

प्रातः काले समुत्थाय सस्त्रीकः स महीपतिः ।
धर्मयुक्तं चकाराऽपि नित्यं कर्म निरन्तरम् ॥ ३१॥

ततो गणेश्वरं भक्त्याऽपूजयद्भक्तिसंयुतः ।
यथा गार्ग्येण भो दक्ष शिक्षितः स तथाऽकरोत् ॥ ३२॥

शमीमन्दारदूर्वाश्चापूजयद्भक्तिसंयुतः ।
प्रार्थ्य पत्राङ्कुराद्यं स पुष्पं चैवाऽऽचिनोन्नृपः ॥ ३३॥

दक्ष उवाच ।
शमीमन्दारदूर्वाणां पूजनं वद मुद्गल ।

सिद्धेर्बुद्धेश्च विपेन्द्र सुतयोर्लक्षलाभयोः ॥ ३४॥

शमीमन्दारदूर्वाणां प्रार्थना कीदृशी भवेत् ।
तां कृत्वा पुष्पपत्रादींश्चिनोम्यहं त्वदाज्ञया ॥ ३५॥

केन मन्त्रेण योगीन्द्र शमीमन्दारकांस्तदा ।
नरोत्तमो गणेशाय परेशाय समर्पयेत् ॥ ३६॥

मुद्गल उवाच ।
शृणु दक्ष महाप्राज्ञ गाणपत्यपरायण ।
सन्तुष्टोऽहं विशेषेण प्रश्नेन च वदामि ते ॥ ३७॥

गणेशस्यैव मन्त्रेण पूजनीया इमे मताः ।
वस्तुभिर्गाणपत्यैश्च अभवंस्तोषसंयुताः ॥ ३८॥

स्त्रीपुम्भावात्मकं दक्ष नास्ति तत्र विचारतः ।
गकारः सिद्धिरूपश्च णकारो बुद्धिरुच्यते ॥ ३९॥

तयोः स्वामी गणेशः स त्रेधारूपधरो बभौ ।
गणास्तस्य तथा पूज्या गाणपत्यैश्च मन्त्रकैः ॥ ४०॥

गकाराद्बिम्बभावाख्यो लक्षः पुत्रः प्रकथ्यते ।
तथा गकाररूपाद्वै लाभस्तौ तन्मयौ मतौ ॥ ४१॥

(Page खं. ५ अ. ४५ पान १०८)
शमीमन्दारकौ दक्ष वरदानाद्विशेषतः ।
गणेशाकाररूपौ तौ भावयेन्नात्र संशयः ॥ ४२॥

दूर्वां देवीं गणेशस्य मन्त्रेणापूजयेन्नरः ।
अथवा वैदिकैर्मन्त्रैः काण्डादिभिः प्रपूजयेत् ॥ ४३॥

नाममन्त्रेण शूद्रस्तान् पूजयेत् सर्वभावतः ।
एतदेव रहस्यं ते कथितं सर्वमञ्जसा ॥ ४४॥

प्रार्थनां ते प्रवक्ष्यामि शृणु दक्ष महामते ।
स्नानयुक्तो वनं गत्वाऽथवा पुरे स्वमन्दिरे ॥ ४५॥

यत्र दूर्वा च मन्दारः शमी तिष्ठति तत्र सः ।
गत्वा प्रणम्य तानादौ प्रार्थयेद्भक्तिसंयुतः ॥ ४६॥

दूर्वेऽन्नब्रह्मरूपे चामृतरूपे शताङ्कुरे ।

गणेशप्रीणनार्थाय चिनोमि त्वां क्षमस्व भोः ॥ ४७॥

शमी सर्वप्रदे देवि गणेशरूपधारिणि ।
चिनोमि त्वां गणेशस्य प्रीणनाय नमाम्यहम् ॥ ४८॥

मन्दारवाञ्छितार्थस्य दातर्विघ्नेशरूपक ।
क्षमस्व प्रीणनार्थाय गणेशस्य चिनोम्यऽहम् ॥ ४९॥

एवं प्रार्थ्य प्रजानाथ शमीमन्दारकौ पुरा ।
दूर्वापत्राणि पुष्पाणि विभुं ह्यानाय्य पूजयेत् ॥ ५०॥

सहस्रनाममन्त्रैश्च अष्टोत्तरशतैर्नरः ।
एकविंशतिकैश्चैव नामभिस्ताः समर्पयेत् ॥ ५१॥

अथवा मूलमन्त्रेण नाममन्त्रेण वा तथा ।
गाणेशैर्विविधैर्मन्त्रैर्दूर्वादीनि समर्पयेत् ॥ ५२॥

एतत्ते कथितं सर्वं रहस्यं पावनात्मकम् ।
गाणपत्यप्रदं पूर्णं किं भूयः श्रोतुमिच्छसि ॥ ५३॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पञ्चमे खण्डे लम्बोदरचरिते ध्यानदूर्वादिपूजाविधिवर्णनं नाम चतुश्चत्वारिंशत्तमोऽध्यायः ॥ ५.४४

## ५.४५ श्रवणमाहात्म्यवर्णनं नाम पञ्चचत्वारिंशत्तमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

दक्ष उवाच ।
गणेशकीलकं ब्रह्मन् वद सर्वार्थदायकम् ।
मन्त्रादीनां विशेषेण सिद्धिदं पूर्णभावतः ॥ १॥

मुद्गल उवाच ।
कीलकेन विहीनाश्च मन्त्रा नैव सुखप्रदाः ।
आदौ कीलकमेवं वै पठित्वा जपमाचरेत् ॥ २॥

तदा वीर्ययुता मन्त्रा नानासिद्धिप्रदायकाः ।
भवन्ति नात्र सन्देहः कथयामि यथाश्रुतम् ॥ ३॥

समादिष्टं चाङ्गिरसा मह्यं गुह्यतमं परम् ।

सिद्धिदं वै गणेशस्य कीलकं शृणु मानद ॥ ४॥

अस्य श्रीगणेशकीलकस्य ।
शिव ऋषिः ।
अनुष्टुप् छन्दः ।
श्रीगणपतिर्देवता ।
ॐ गं योगाय स्वाहा ।
ॐ गं बीजम् ।
विद्याऽविद्याशक्तिगणपतिप्रीत्यर्थे जपे विनियोगः ।
छन्दऋष्यादिन्यासांश्च कुर्यादादौ तथा परान् ।
एकाक्षरस्यैव दक्ष षडङ्गानाचरेत् सुधीः ॥ ५॥

ततो ध्यायेद् गणेशानं ज्योतीरूपधरं परम् ।
मनोवाणीविहीनं च चतुर्भुजविराजितम् ॥ ६॥

शुण्डादण्डमुखं पूर्णं द्रष्टुं नैव प्रशक्यते ।
विद्याऽविद्यासमायुक्तं विभूतिभिरुपासितम् ॥ ७॥

(Page खं. ५ अ. ४५ पान १०९)
एवं ध्यात्वा गणेशानं मानसैः पूजयेत् पृथक् ।
पञ्चोपचारकैर्दक्ष ततो जपं समाचरेत् ॥ ८॥

एकविंशतिवारं तु जपं कुर्यात् प्रजापते ।
ततः स्तोत्रं समुच्चार्य पश्चात् सर्वं समाचरेत् ॥ ९॥

रूपं बलं श्रियं देहि यशो वीर्यं गजानन ।
मेधां प्रज्ञां तथा कीर्तिं विघ्नराज नमोऽस्तु ते ॥ १०॥

यदा देवादयः सर्वे कुण्ठिता दैत्यपैः कृताः ।
तदा त्वं तान् निहत्य स्म कुरुषे वीर्यसंयुतान् ॥ ११॥

तथा मन्त्रा गणेशान कुण्ठिताश्च दुरात्मभिः ।
शापैश्च तान् सवीर्यांस्ते कुरुष्व त्वं नमो नमः ॥ १२॥

शक्तयः कुण्ठिताः सर्वाः स्मरणेन त्वया प्रभो ।
ज्ञानयुक्ताः सवीर्याश्च कृता विघ्नेश ते नमः ॥ १३॥

चराचरं जगत् सर्वं सत्ताहीनं यदा भवेत् ।
त्वया सत्तायुतं ढुण्ढे स्मरणेन कृतं च ते ॥ १४॥

तत्त्वानि वीर्यहीनानि यदा जातानि विघ्नप ।
स्मृत्या ते वीर्ययुक्तानि पुनर्जातानि ते नमः ॥ १५॥

ब्रह्माणि योगहीनानि जातानि स्मरणेन ते ।
यदा पुनर्गणेशान योगयुक्तानि ते नमः ॥ १६॥

इत्यादि विविधं सर्वं स्मरणेन च ते प्रभो ।
सत्तायुक्तं बभूवैव विघ्नेशाय नमो नमः ॥ १७॥

तथा मन्त्रा गणेशान वीर्यहीना बभूविरे ।
स्मरणेन पुनर्ढुण्ढे वीर्ययुक्तान् कुरुष्व ते ॥ १८॥

सर्वं सत्तासमायुक्तं मन्त्रपूजादिकं प्रभो ।
मम नाम्ना भवतु ते वक्रतुण्डाय ते नमः ॥ १९॥

उत्कीलय महामन्त्रान् जपेन स्तोत्रपाठतः ।
सर्वसिद्धिप्रदा मन्त्रा भवन्तु त्वत्प्रसादतः ॥ २०॥

गणेशाय नमस्तुभ्यं हेरम्बायैकदन्तिने ।
स्वानन्दवासिने तुभ्यं ब्रह्मणस्पतये नमः ॥ २१॥

गणेशकीलकमिदं कथितं ते प्रजापते ।
शिवप्रोक्तं तु मन्त्राणामुत्कीलनकरं परम् ॥ २२॥

यः पठिष्यति भावेन जप्त्वा ते मन्त्रमुत्तमम् ।
स सर्वसिद्धिमाप्नोति नानामन्त्रसमुद्भवाम् ॥ २३॥

एनं त्यक्त्वा गणेशस्य मन्त्रं जपति नित्यदा ।
स सर्वफलहीनश्च जायते नाऽत्र संशयः ॥ २४॥

सर्वसिद्धिप्रदं प्रोक्तं कीलकं परमाद्भुतम् ।
पुराऽनेन स्वयं शम्भुर्मन्त्रजां सिद्धिमालभत् ॥ २५॥

विष्णुब्रह्मादयो देवा मुनयो योगिनः परे ।
अनेन मन्त्रसिद्धिं ते लेभिरे च प्रजापते ॥ २६॥

ऐलः कीलकमाद्यं वै कृत्वा मन्त्रपरायणः ।
गतः स्वानन्दपूर्यां स भक्तराजो बभूव ह ॥ २७॥

सस्त्रीको जडदेहेन ब्रह्माण्डमवलोक्य तु ।

गणेशदर्शनेनैव ज्योतीरूपो बभूव ह ॥ २८॥

दक्ष उवाच ।
ऐलो जडशरीरस्थः कथं देवादिकैर्युतम् ।
ब्रह्माण्डं स ददर्शैव तन् मे वद कुतूहलम् ॥ २९॥

पुण्यराशिः स्वयं साक्षान्नरकादीन् महामते ।
अपश्यच्च कथं सोऽपि पापिदर्शनयोग्यकान् ॥ ३०॥

मुद्गल उवाच ।
विमानस्थः स्वयं राजा कृपया तान् ददर्श ह ।
गाणेशानां जडस्थश्च शिवविष्णुमुखान् प्रभो ॥ ३१॥

स्वानन्दगे विमाने ये संस्थितास्ते शुभाशुभे ।
योगरूपतया सर्वे दक्ष पश्यन्ति चाञ्जसा ॥ ३२॥

एतत्ते कथितं सर्वमैलस्य चरितं शुभम् ।
यः शृणोति स वै मर्त्यो भुक्तिं मुक्तिं लभेत् ध्रुवम् ॥ ३३॥

खण्डं लम्बोदरस्यैतद्यः शृणोति नरोत्तमः ।
पठति ब्रह्मभूतः श्रावयते जायते स्वयम् ॥ ३४॥

नानेन सदृशं किञ्चिद्भुक्तिमुक्तिप्रदं मतम् ।
योगरूपो महाभाग यत्र लम्बोदरः स्तुतः ॥ ३५॥

नानाश्रुतिस्मृतीनां यच्छ्रवणेन फलं लभेत् ।
तदस्यैकस्य खण्डस्य श्रवणेन भवेदिह ॥ ३६॥

नानादानानि ये दद्युस्तीर्थेषु स्नानकारकाः ।
तेभ्यः शताधिकं पुण्यं लभेदस्य तु संश्रयात् ॥ ३७॥

व्रतानि यज्ञकान् सर्वान् कुरुते मानवः प्रभो ।
अस्य श्रवणमात्रेण लभेत् तस्माच्छताधिकम् ॥ ३८॥

नानातपांसि सर्वाणि यः करोति नरोऽसकृत् ।
अस्य श्रवणमात्रेण लभेत् पुण्यमपारकम् ॥ ३९॥

पुत्रपौत्रादिसंयुक्तो धनधान्यादिभाग्यवान् ।
श्रवणेन नरः सद्यो भवत्यत्र न संशयः ॥ ४०॥

यद्यदिच्छति तत्तत्तु सफलं जायते क्षणात् ।

श्रवणेन प्रजानाथ खण्डस्यास्य न संशयः ॥ ४१॥

बहुनात्र किमुक्तेन साक्षाद्योगप्रदः परः ।
सर्वसिद्धिप्रदः खण्डः कथितस्ते प्रजापते ॥ ४२॥

इदं लम्बोदरस्यैव चरितं सर्वसिद्धिदम् ।
कथितं ते समासेन किं भूयः श्रोतुमिच्छसि ॥ ४३॥

सूत उवाच ।
यथा दक्षाय विप्रेश मुद्गलेन प्रकाशितम् ।
मया तव तथाग्रेऽपि कथितं भार्गवाग्रणीः ॥ ४४॥

चरितं शौनकाद्याश्च श्रुतं लम्बोदरस्य यत् ।
धन्योऽहं भवतां योगाद्गणेशचरिते रतः ॥ ४५॥

विस्तरेण शिवाद्याश्च वेदाद्याः शेषमुख्यकाः ।
नैव वर्णयितुं शक्ता बभूवुस्तत्र कोप्यहम् ॥ ४६॥

व्यासेन कथितं सर्वं चरितं यादृशं पुरा ।
तादृशं कथितं विप्र श्रोतुमिच्छसि किं पुनः ॥ ४७॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पञ्चमे खण्डे लम्बोदरचरिते श्रवणमाहात्म्यवर्णनं नाम पञ्चचत्वारिंशत्तमोऽध्यायः ॥ ५.४५
॥ श्रीगजाननार्पणमस्तु ॥

॥ इति श्रीमुद्गलपुराणे पञ्चमः खण्डः समाप्तः ॥

Proofread by Yash Khasbage

*MudgalapurAna Khanda 5 Lambodaracharitam*

pdf was typeset on September 18, 2023

Please send corrections to *sanskrit@cheerful.com*